निर्णयसागर प्रेस–बम्बई के संस्करण से पुनर्मुद्रित एवं प्रकाशित

# निर्णयसिन्धुः

सटिप्पणः



कृष्णदास अकादमी, वाराणसी

निर्णयसागर प्रेस–बम्बई के संस्करण से पुनर्मुद्रित एवं प्रकाशित

म० म० श्रीकमलाकरभट्टप्रणीतः

# निर्णयसिन्धुः

पाठान्तरसहित-टिप्पण्यादिभिर्विभूषितः

सटिप्पण-सम्पादकः

श्री पं० नारायणराम आचार्यः




( If any defect is found in this book, please return the copy by V. P. P. for postage to the publisher for exchange free of cost. )

कृष्णदास अकादमी, वाराणसी

१९८५

प्रकाशक : कृष्णदास अकादमी, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : पुनर्मुद्रित, वि० सं० २०४२
मूल्य रू० : ३१-०० ( रुपये इकतीस )

The Publication has been brought out with the Financial assistance from the Govt. of India, Ministry of Education and Culture.


पो० बा० नं० १११८
चौक, ( चित्रा सिनेमा बिल्डिग ), वाराणसी-२२१००१ ( भारत )

अपरं च प्राप्तिस्थानम्

चौखम्बा संस्कृत सीरीज आफिस
के० ३७/९९, गोपाल मन्दिर लेन
पो० बा० नं० १००८, वाराणसी-२२१००१ ( भारत )
फोन : ६३१४५

REPRINTED AND PUBLISHED FROM THE EARLIER EDITION
OF NIRNAYASAGAR PRESS-BOMBAY

# NIRṆAYASINDHU

OF

## MM. SRI KAMALAKAR BHATT

With Variant and Notes

By

Pt. Narayana Ram Acharya "Kavyatirtha"




KRISHNADAS Academy

1985

# भूमिका

इह खलु निखिलधर्माचाराचरणभास्वरे भारते खण्डेऽद्यावधि परमकारुणिकैर्निगमागमपारावारपारीणैः कर्मोपासनाज्ञानकाण्डत्रयधुरीणैरनेकैर्महर्षिभिरनेके लघवो महान्तश्च स्मृत्यादयो धर्मशास्त्रनिबन्धा लोकोपकृतये धर्मसेतुपालनाय च सादरं प्रणीताः सन्ति। परं तेषु बह्वृषिप्रणीतत्वेनान्योन्यविरोधतयेदमित्थमेवेति निर्णयानैकविध्यात्तत्र तत्र भूरिशः संदेहस्थलान्यासन्। एतदापन्मार्जनाय श्रीकाशीक्षेत्रे महामहोपाध्यायैः कमलाकरभट्टैर्बहुशः पूर्वतनान्सिद्धान्तग्रन्थानालोड्य मतमतान्तरखण्डनपूर्वं सर्वेषामेकवाक्यतयायं मीमांसाप्रचुरो निर्णयसिन्धुनामा ग्रन्थो व्यरचि। स च सर्वत्राव्याहतत्वेन प्रसृतः सन्नखिलधर्मशास्त्रग्रन्थेषु चूडामणीभूय विराजतेतराम्।

एतद्ग्रन्थप्रणेतुः कमलाकरभट्टस्येतिवृत्तमित्थं श्रूयते–पूर्वं प्रतिष्ठान( पैठन )पत्तने महाविद्वान् सदाचारसंपन्नश्चाश्वलायनशाखीयो गोविन्दभट्टाख्यो देशस्थब्राह्मण आसीत्। तस्य च महापण्डितः सदाचारशमदमादिसंपत्संपन्नः पित्रधिकगुणो रामेश्वरभट्टनामा पुत्रो बभूव। स चानवद्यविद्याविलासेन लोकेष्वभ्यर्हितोऽपि चिरकालपर्यन्तमनपत्यत्वेन दूयमानान्तःकरणो निर्दिष्टहेतुनैवोद्भूतनिर्वेदः सन् यात्रामिषेण श्रीविश्वेश्वर-मन्दाकिनी - विद्वद्वरमाण्डतं काशीक्षेत्रं जगाम। तत्राहर्दिवं श्रीविश्वेश्वरदर्शनेन विद्वन्मण्डलसान्निध्येन गङ्गोदकामृतावगाहपानादिना च संजाताभिनवानन्दसंदोहभरेण निर्भररञ्जितान्तःकरणः श्रीरामचन्द्रचरणपरिचरणाचरणस्तत्रैव बहुदिनगणमवात्सीत्। तत्र निवसतो यातेषु कतिपयाहर्गणेषु श्रीरामचन्द्रस्य करुणामृतपूर्णदृशा प्रारब्धदशासुविपाकेन चोत्तरावस्थायामनवद्यगुणगणालंकृतो विद्वन्मौलिनिघृष्टचरणकमलोऽतीव ब्रह्मवर्चस्वी नारायणभट्टाह्वयः पुत्रो बभूव।

नारायणभट्टविषयिणी श्रूयते तदानींतनेत्थमतिमननीया किंवदन्ती–कदाचिदार्यधर्मध्वंसाय बद्धपरिकरैर्दुर्यवनैरेकीभूय 'काश्यां सर्वैः प्रेमातिशयेन रात्रंदिवं श्रीविश्वेश्वर एव भजनार्चनादिना सेव्यते, अतोऽस्य वैगुण्ये संपादिते तद्धर्महानिः सुलभतरा स्यात्' इति विचार्य श्रीविश्वेश्वरमन्दिरमुत्सन्नमकारि। तदुष्कर्मालोच्य सर्वेऽपि यवनराजप्रतीकारासमर्थाः केवलं दुःखार्णवेऽमाङ्क्षुः। तदानीमेव तत्रेश्वरक्षोभादुर्भिक्षनिदानं महदवर्षणमभवत्। एतदन्तरा यवनैर्नारायणभट्टस्य ब्रह्मवर्चसतेजोविशेषं लोकमुखोद्गीर्णमाकर्ण्य तत्परीक्षार्थमेव तं प्रति गत्वा 'कथमिदं दुःसहमवर्षणमभवत्? संप्रति भवन्तो वृष्टौ समर्थाः स्थ न वा?' इति पृष्टम्। तच्छ्रुत्वा किंचित्कालं विचार्य तैरुत्तरितं–'भवत्कृतमन्दिरोच्छेदक्षुब्धेश्वरेच्छापरिणाम एवायमवर्षणरूपेण लोकान्संतापयन्नुज्ज्वलति। अतस्तन्मन्दिरं पूर्ववदुपकल्प्यते चेदीशकृपया सुवृष्टिः स्यात्। यदि पुनः कल्पितेऽपि प्रासादे वृष्टिर्न स्याच्चेदहं स्वधर्मं हित्वा भवदिष्टमेव यावनधर्मं स्वीकरोमि' इति। यवनैरित्थं निःशङ्कं निर्बन्धवचः श्रुत्वा 'भवत्प्रभावेणाद्यैव यदि वृष्टिः स्यान्मन्दिरं पूर्ववत्साधयिष्यामस्तत्तूर्णं यतितव्यम्' इति प्रार्थितसमनन्तरमेव ओमिति

भगवन्तं हृदिकृत्य तपस्यार्थं भट्टे प्रायोपविष्टे तदहरेवेशकृपया सुवृष्टिरभवत्। तदा चकितैर्यवनैर्विश्वेश्वरमन्दिरं पूर्ववत्कल्पितं तदेवैतावन्तं कालं काश्यां वरीवर्ति। एतदतिमानुषाद्भुततपःसंपादितं कर्मालोच्य जनतया **नारायणभट्टाय जगद्गुरुरिति** जगत्पूज्या संज्ञा सर्वत्राग्रपूजासंमानश्च दत्तः। तयोर्मध्ये जगद्गुरुपदवी **नारायणभट्ट**मभिव्याप्यैवासीत्। अग्रपूजासंमानस्त्वद्यावधि श्रीकाशीक्षेत्रे तद्वंशीयानामुत्तरोत्तरं विद्वत्तमत्वेनानवरतमखण्डदण्डायमाना प्रचलतीति कर्णाकर्णिकया श्रूयते। अस्य जन्मनिधनकालौ यथावन्न ज्ञायेते परंतु वैक्रमीये षोडशतमे शतकेऽस्य जीवनसमय आसीदित्यनुमीयते। अनेन प्रणीतेषु ग्रन्थेषु **प्रयोगरत्नं** ( नारायणभट्टी ) **त्रिस्थलीसेतु**श्चेति ग्रन्थद्वयं सर्वत्र विराजते। याज्ञिकाश्च द्विजसंस्कारान्प्रायः प्रयोगरत्नाधारेणैवाचरन्ति।

अस्य महापण्डितौ सदाचारसंपन्नौ च **रामकृष्णभट्टः शंकरभट्ट** इति द्वावात्मजावास्ताम्। तत्र ज्येष्ठेन **रामकृष्णभट्टेन** बहवो ग्रन्थाः प्रणीतास्तेषु द्वौ **तन्त्रवार्तिकोपरिव्याख्या, जीवत्पितृकनिर्णय**श्च प्रसिद्धौ स्तः। कनीयसा च **द्वैतनिर्णया**ख्यो महान्निबन्धो व्यरचि।

**रामकृष्णभट्टस्य दिनकरभट्टः, कमलाकरभट्टः, लक्ष्मणभट्ट** इति पुत्रत्रयमासीत्। तत्र ज्येष्ठेन **दिनकरभट्टा**ख्यविदुषा मीमांसायां **भाट्टदिनकरा**ख्यो ग्रन्थ उद्द्योतः, धर्मशास्त्रे **शान्तिसारा**ख्यश्च ग्रन्थः प्रणीतोऽस्ति। अयमेव क्वचिद्दिवाकरनाम्ना व्यवह्रियते। अस्मादेव **विश्वेश्वरभट्टा**ख्यो महापण्डित आत्मजः समजनि। अयमेव **कायस्थधर्मदीप**प्रणेता **गागाभट्ट**नाम्ना प्रसिद्धिमगात्। तथा चानेन **भाट्टचिन्तामण्या**द्योऽनेके ग्रन्थाः प्रणीताः सन्ति। अनेनैव चतुःसप्तत्युत्तरषोडशशत ( १६७४ ) तमे ख्रिस्ताब्दे रायगडोपरि **श्रीशिवच्छत्रपते**राज्यासनाभिषेकः समकारीति निश्चीयते।

**रामकृष्णभट्टस्य** कनीयसा **लक्ष्मणभट्टा**ख्यपुत्रेणा**चाररत्ना**दिग्रन्थाः प्रणाताः सन्ति।

**रामकृष्णभट्टस्य** द्वैतीयीकः पुत्रः **कमलाकरभट्टा**ख्य आसीत्। अयमेव **प्रकृतनिर्णयसिन्धु**ग्रन्थप्रणेता। अग्रेऽप्ययमेव वंशस्थापकः समभवत्। अनेनैव धर्मशास्त्रेऽन्येऽपि **पूर्तकमलाकरः, शान्तिकमलाकरः, कमलाकराह्निकं, शूद्रकमलाकर**श्चेति ग्रन्थाः प्रणीताः। व्यवहारे **विषादताण्डव** (विवादकमलाकरो) नाम ग्रन्थः कृतः प्रसिद्धोऽस्ति। साहित्यशास्त्रे काव्यप्रकाशोपरि व्याख्या कृतास्ति सा चैतदीयान्यानेकटीकाभ्यः मूर्धन्यत्वेन चकास्ति। आस्तामतिप्रशस्तप्रशंसनया। आमूलाद्विद्वद्वंश्येनापादितनिजवंशकृत्येन **श्रीरामकृष्णभट्टा**त्मजेन दुर्निर्णयदुरूहधर्मशास्त्रीयविषयाणा यथावन्निर्णयं कृत्वाऽगाधाब्धिसदृक्षं ग्रन्थं निर्माय **निर्णयसिन्धु**रिति ( एतद्ग्रन्थदर्शनमात्रेण स्वाभिधानस्य शीघ्रोपस्थित्यै **निर्णयकमलाकर** इति च ) तन्नाम प्रतिष्ठापितम्। स चासेतोराहिमाचलं स्वकार्यं प्रथयन्वर्वर्ति।

मीमांसात्मकभाषयास्य सुनिबद्धत्वाच्छास्त्रनिर्णये राजकीयपरीक्षार्थिनां चान्तेवासिनां पठनसमये यत्रकुत्रापि व्यामोहहेतुत्वं न स्यादिति विविधसिद्धान्तग्रन्थानालोच्य विषमपदटिप्पणीभिर्विशदीकृत्य पाठान्तरैश्चालंकृत्य प्रकाशितोऽयं ग्रन्थः समेषामुपयोगपटुर्भूयादित्यभिलष्यते— **संपादकेन।**

---

# निर्णयसिन्धुविषयानुक्रमः

## प्रथमपरिच्छेदः

इति प्रथमपरिच्छेदानुक्रमः।

## विषयानुक्रमः

विषयाः — पृष्ठांकाः



विषयाः — पृष्ठांकाः



विषयाः — पृष्ठांकाः

विषयाः पृष्ठांकाः



इति संस्कारप्रकरणम्

---

अथ क्षुद्रकालाः



विषयाः पृष्ठांकाः



विषयाः पृष्ठांकाः



इति तृतीयपरिच्छेदपूर्वार्धं संपूर्णम्

---

इति तीर्थश्राद्धविधिः

अथाशौचप्रकरणम्

इति तृतीयः परिच्छेदः संपूर्णः

इति निर्णयसिंधोर्विषयानुक्रमणिका समाप्ता



नमः सदुद्धराय माधवाय ।

श्रीमत्कमलाकरभट्टप्रणीतो

# निर्णयसिन्धुः

**–मङ्गलाचरणम्–**

कारुण्यैकनिकेतं रामं सीतालतायुक्तम् ।
विश्वामित्रान्ववायव्रततिसमालम्बिशाखिनं वन्दे ॥ १ ॥
लक्ष्मीसहायं कल्पद्रुतलं रञ्जितगोकुलम् ।
बर्हापीडं घनश्यामं महः किंचिदुपास्महे ॥ २ ॥
वेदार्थधर्मरक्षायै मायामानुषरूपिणम् ।
पितामहं हरिं वन्दे भट्टनारायणाह्वयम् ॥ ३ ॥
यत्पादसंस्मृतिः सर्वमङ्गलप्रतिभूर्मता ।
तान् भट्टरामकृष्णाख्यान् श्रीतातचरणान्नुमः ॥ ४ ॥
सर्वकल्याणसंदोहनिदानं यत्पदद्वयम् ।
द्युनदीसोदरीमम्बामुमाख्यां नौमि सादरम् ॥ ५ ॥
बिन्दुमाधवपादाब्जरोलम्बीकृतविग्रहम् ।
ज्यायांसं भ्रातरं भट्टदिवाकरमुपास्महे ॥ ६ ॥
हेमाद्रिमाधवमते प्रविचार्य सम्यगालोच्य तत्त्वमथ तीर्थकृतां परेषाम् ।
श्रीरामकृष्णतनयः कमलाकराख्यः काले यथामति विनिर्णयमातनोति ॥ ७ ॥
सन्ति यद्यपि विद्वांसस्तन्निबन्धाश्च कोटिशः ।
तथाप्यमुष्य वैदग्धीं केचिद्विज्ञातुमीशते ॥ ८ ॥

---

१—अन्ववायो वंशः । व्रततिर्लता, प्रतानत्वात् । तथा च विश्वामित्रस्य वंश एव व्रततिर्वल्लिस्तया कृतः समालम्ब आश्रयोऽस्यास्तीति तथाभूतं शाखिनं वृक्षमित्यर्थः । '°समालम्ब्यशाखिनं' इति कृष्णम्भट्टीसंमतः पाठः । ताटिकादियागविध्वंसकराक्षसविनाशपूर्वकं यज्ञनिर्विघ्नत्वसंपादनात् । २—अत्र कल्पद्रुत्वाभिधानं अचिन्त्यमहिमव्यञ्जनार्थं, तलं=स्वरूपम्, कल्पवृक्षस्वरूपमित्यर्थः । तस्य मुक्तेरपि दातृत्वात् । '°तलरञ्जितगोकुलम्' इति पाठः सुगमः । 'कल्पद्रुतरलं जितगोकुलम्' इति पाठे कल्पद्रुस्तरलो येनात एव जितं स्वायत्तं गोकुलं यस्येत्यर्थः । ३—"पूर्वपदार्थगतश्रैष्ठ्यतात्पर्यद्योतकमिदं 'राजसिंहः' इत्यादिवत् । 'तं भट्टरामकृष्णाख्यं श्रीतातं सादरं नुमः' इति तु रमणीयम् ।" इति संशयध्वान्तनाशिनीव्याख्याकारः ।

तत्र **संक्षेपतः कालः षोढा**–अब्दः, अयनम्, ऋतुः, मासः, पक्षः, दिवस इति। तत्राब्दा **माधवमते पञ्चधा**–सावनः, सौरः, चान्द्रः, नाक्षत्रः, बार्हस्पत्य इति। गुरोर्मध्यमराशिभोगेन बार्हस्पत्यः; स च ज्योतिःशास्त्रे प्रसिद्धः। **हेमाद्रि**स्त्वन्त्ययोर्धर्मशास्त्रेऽनुपयोगात्त्रिस्त्र एव विधा आह। तत्र वक्ष्यमाणैः सावनादिद्वादशमासैस्तत्तदब्दम्, मलमासे तु सति षष्टिदिनात्मक एको मास इति द्वादशमासत्वमविरुद्धम्; तथा च **व्यासः**–'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः' इति॥

अब्दः पञ्चधा।

तत्र **चान्द्रोऽब्दः षष्टिभेदः**। तदाह **गार्ग्यः**–'प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः। अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च॥ ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः। चित्रभानुः सुभानुश्च तारणः पार्थिवोऽ[1]व्ययः॥ सर्वजित्सर्वधारी च विरोधी विकृतिः खरः। नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ। हेमलम्बो विलम्बोऽथ विकारी शार्वरी प्लवः। शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ॥ प्लवङ्गः कीलकः सौम्यः साधारणविरोधकृत्। परिधावी प्रमादी च आनन्दो राक्षसोऽनलः॥ पिङ्गलः कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती। दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः॥' इति। यद्यपि ज्यौतिषे गुरोर्मध्यमराशिभोगेन प्रभवादीनां माघादौ प्रवृत्तिरुक्ता, तथापि प्रभवादीनां चान्द्रत्वमप्यस्ति; 'चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे' इति **माधवोक्तेः**। तेन चान्द्रः प्रभवादिश्चैत्रसिते प्रवर्तते, बार्हस्पत्यस्तु माघादौ। **तयोर्विनियोगो ज्योतिर्निबन्धे ब्रह्मसिद्धान्ते**–'व्यावहारिकसंज्ञोऽयं कालः स्मृत्यादिकर्मसु। योज्यः सर्वत्र तत्रापि जैवो वा नर्मदोत्तरे॥' इति। **आर्ष्टिषेणः**–'स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा। नान्यं यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता॥' इति॥

संवत्सरनामानि।

संवत्सरनिर्णयः।

**अयननिर्णयः**। **अयनं** तु सौरर्तुत्रयात्मकम्; 'सौरर्तुत्रितयं प्रदिष्टमयनम्' इति **दीपिकोक्तेः**। तद्द्विविधम्–दक्षिणमुत्तरं चेति। कर्कसंक्रान्तिर्दक्षिणायनम्, मकरेऽन्यत्। **अनयोर्विनियोगमाह मदनरत्ने सत्यव्रतः**–'देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ। दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात्॥' **वैखानसः**–'[2]मातृभैरववाराहनरसिंहत्रिविक्रमाः। महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने॥' वैशब्दोऽप्यर्थे, न तु दक्षिणायन एवेति नियमः; पूर्ववचने दक्षिणायने निषिद्धाया देवप्रतिष्ठाया देवविशेषे प्रतिप्रसवमात्रात्। **रत्नमालायाम्**–'गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम्। सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे च॥' इति। **अस्यापवादः काशीखण्डे**–'सदा कृतयुगं चास्तु सदा चास्तूत्तरायणम्। सदा महोदयश्चास्तु काश्यां निवसतां सताम्॥' इत्ययनम्॥

अयनयोर्विनियोगः।

अस्य काश्यामपवादः।

---

१–'व्यय' इत्यपि। २–'मातृ'शब्द उग्रकर्मोपलक्षकः; 'उग्रे कर्मणि सौम्ये च स्तोऽयने दक्षिणोत्तरे' इति माधवोक्तेः।

**ऋतुनिर्णयः** । ऋतुर्मासद्वयात्मा । मलमासे तु मासद्वयात्मक एको मासः, तेन मासद्वयात्मकत्वमविरुद्धम् । स द्वेधा—चान्द्रः, सौरश्च । 'चैत्रारम्भो वसन्तादिश्चान्द्रः । मीनारम्भो मेषारम्भो वा सौरः; मीनमेषयोर्मेषवृषयोर्वा वसन्तः' इति **बौधायनोक्तेः** । **अनयोर्विनियोगमाह त्रिकाण्डमण्डनः**—'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु । तदभावे तु सौरर्तुष्विति ज्योतिर्विदां मतम् ॥' स द्विविधोऽपि षोढा—वसन्तो, ग्रीष्मो, वर्षाः, शरद्, हेमन्तः, शिशिरः । इत्यृतुः ॥

ऋतुमासभेदाः ।

**मासनिर्णयः** । **मासश्चतुर्धा**—सावनः, सौरः, चान्द्रो, नाक्षत्र इति । त्रिंशद्दिनः सावनः । अर्कसंक्रान्तेः संक्रान्त्यवधिः सौरः । यद्यपि **हेमाद्रिमाधवकालादर्शाद्या**लोचनेन, 'मेषसंक्रान्त्यां समाप्तामावास्याकत्वं चैत्रत्वम्' इति लक्षणाच्च मेषसंक्रान्तेश्चैत्रत्वं प्रतीयते; तथापि मेषसंक्रमे दर्शद्वये सति वैशाखस्यैवाधिक्यात्तत्पूर्वभावित्वेन मीनस्यैव चैत्रत्वं युक्तम् । एवं मेषादयो वैशाखाद्याः । अतो मीनसंक्रान्तिमध्यस्थपौर्णमासीकत्वं तादृशाद्यतिथिकत्वं वा चैत्रत्वमिति लक्षणात् मीन एव सौरश्चैत्रः । एवं वैशाखादयोऽपि मेषाद्या ज्ञेयाः ॥

**सौरमासप्रसङ्गात् संक्रान्ति[1]निर्णय उच्यते** । तत्र 'पूर्वतोऽपि परतोऽपि संक्रमात् पुण्यकालघटिकास्तु षोडश' इति सामान्यतः पुण्यकालः सर्वैरुक्तः । विशेषस्तूच्यते—अत्र मामकाः संग्रहश्लोकाः-'प्रागूर्ध्वा दश, पूर्वतः षडवनिः, तद्वत्पराः, पूर्वतस्त्रिंशत्, षोडश पूर्वतो,—ऽथ परतः, पूर्वाः पराः स्युर्दश । पूर्वाः षोडश, चोत्तरा ऋतुभुवः, पश्चात्खवेदाः, पुनः पूर्वाः षोडश, चोत्तराः पुनरथो पुण्यास्तु मेषादितः ॥' इति । अस्यार्थः—मेषे प्रागूर्ध्वं च दश घटिकाः पुण्यकालः, वृषे पूर्वाः षोडश, मिथुने पराः षोडश, कर्के पूर्वास्त्रिंशत्, सिंहे पूर्वाः षोडश, कन्यायां पराः षोडश, तुलायां प्रागूर्ध्वा दश, वृश्चिके पूर्वाः षोडश, धनुषि पराः षोडश, मकरे चत्वारिंशत्पराः । इदं च **हेमाद्रिमतेनोक्तम्** । **माधवमते** त्वत्र परा विंशतिः पुण्याः, कुम्भे पूर्वाः षोडश, मीने पराः षोडशेति । 'याप्युत्तरा पुण्यतमा मयोक्ता सायं भवेत्सा यदि सापि पूर्वा । पूर्वा तु योक्ता यदि सा विभाते साप्युत्तरा रात्रिनिषेधतः स्यात् ॥ अर्वाङ् निशीथाद्यदि संक्रमः स्यात्पूर्वेऽह्नि पुण्यं परतः परेऽह्नि । आसन्नयामद्वयमेव पुण्यं निशीथमध्ये तु दिनद्वयं स्यात् ॥ कर्के झषेऽप्येवमिति ह्युवाच **हेमाद्रिसूरिश्च** तथा**ऽपरार्कः** । झषः प्रदोषे यदि वाऽर्धरात्रे परेऽह्नि पुण्यं त्वथ कर्कटश्चेत् ॥ प्रभातकाले यदि वा निशीथे पूर्वेऽह्नि पुण्यं त्विति **माधवार्यः** ॥' अत्र मूलवचनानि **माधवापरार्कहेमाद्र्यादिषु** द्रष्टव्यानि ।

**सर्वासु संक्रान्तिषु दानविशेषौ हेमाद्रौ दानकाण्डे** उक्तः । **विश्वामित्रः**—'मेषसंक्रमणे भानोर्मेषदानं महाफलम् । वृषसंक्रमणे दानं गवां प्रोक्तं तथैव

---

१—मण्डलनेमिमध्यं केन्द्रः, तस्य पूर्वराशिसंबन्धत्यागेनोत्तरराशिप्रवेशः संक्रान्तिः, तत्कालश्चातिसूक्ष्म इति तत्रैकस्य कर्तव्यस्याननुष्ठाने प्रसक्ते तद्योग्यतया तत्संनिहितः पूर्वोत्तरः कालो ग्राह्यः । स च यावता कालेन केन्द्रपूर्वापरौ भागावुत्तरराशिचक्रं प्रविशतस्तावान् । स एव च भोगः पञ्चदशनाडीरूपः ।

च ॥ वस्त्रान्नपानदानानि मिथुने विहितानि तु । घृतधेनुप्रदानं च कर्कटेऽपि विशिष्यते ॥ ससुवर्णं छत्रदानं सिंहेऽपि विहितं सदा । कन्याप्रवेशे वस्त्राणां वेश्मनां दानमेव च ॥ तुलाप्रवेशे तिलानां [धान्यानां] गोरसानामपीष्टदम् । अन्नकीचलिते भानौ दीपदानं महाफलम् ॥ (अन्नकी=वृश्चिकः) धनुःप्रवेशे वस्त्राणां यानानां च महाफलम् । झषप्रवेशे दारूणां दानमग्नेस्तथैव च ॥ कुम्भप्रवेशे दानं तु गवामम्बुतृणस्य च । मीनप्रवेशे स्थानानां मालानामपि चोत्तमम् ॥' इति ।

**अत्रोपवासमाह हेमाद्रावापस्तम्बः**—'अयने विषुवे चैव त्रिरात्रोपोषितो नरः । स्नात्वा यस्त्वर्चयेद्भानुं सर्वकामफलं लभेत् ॥' अशक्तौ तु **वृद्धवसिष्ठः**—'अयने संक्रमे चैव ग्रहणे चन्द्रसूर्ययोः । अहो[1]रात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ॥' अत्रोपवासः संक्रमदिने; दानादि तु पुण्यकालदिन **इत्याचार्यचूडामणिः** । विधिलाघवात्पुण्यकालदिन एवोभयमिति **वृद्धाः** । इदं च पुत्रिगृहस्थातिरिक्तविषयम्; 'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः । उपवासो न कर्तव्यः पुत्रिणा गृहिणा तथा ॥' इति **जैमिनिवचनात्** ।

अत्र श्राद्धमुक्तं **हेमाद्रौ विष्णुधर्मे**—'श्राद्धं संक्रमणे भानोः प्रशस्तं पृथिवीपते' । **अपरार्केऽपि विष्णुः**—'[2]आदित्यसंक्रमश्चैव विशेषेणायनद्वयम् । व्यतीपातोऽथ [3]जन्मर्क्षं चन्द्रसूर्यग्रहस्तथा ॥ एतांस्तु श्राद्धकालान्वै [4]काम्यानाह प्रजापतिः ।' इति । द्वादशादिदिनैर्वागयनांशप्रवृत्तावपि पुण्यं वक्तुमयनग्रहणम् । अन्यथा संक्रमेण सिद्धेरयनग्रहणं व्यर्थं स्यादित्यपरार्कः । **हेमाद्रावपि गालवः**—'अयनांशकतुल्येन कालेनैव स्फुटं भवेत् । मृगकर्कादिगे सूर्ये याम्योदगयने सति ॥ तदा संक्रान्तिकाले स्युरुक्ता विष्णुपदादयः ॥' इति । अयनांशकच्युतिरूपे संक्रान्तिकालेऽपि विष्णुपदादयः प्रवर्तन्ते । तेन तत्प्रयुक्तं पुण्यकालादि तत्रापि ज्ञेयमिति स एव व्याचख्यौ । तच्च मेषायनं वृषायनमित्यादि सर्वत्र ज्ञेयम् । **माधवीयेऽपि जाबालिः**—'संक्रान्तिषु यथा कालस्तदीयेऽप्ययने तथा । अयने विंशतिः पूर्वा मकरे विंशतिः पराः ॥' इति । मकरायने पूर्वा विंशतिघटिकाः पुण्याः, मकरसंक्रान्तौ तु पश्चाद्विंशतिः । अन्यत्रायने तत्संक्रान्तिवदित्यर्थः ।

**विष्णुपदादिस्वरूपं च दीपिकायामुक्तम्**—'हर्यङ्घ्रिर्वृषसिंहवृश्चिकघटेष्वर्कस्य यः

---

१—अहोरात्रोषित इत्यत्र प्रत्ययार्थस्य भूतकालत्वं न विवक्षितम्—'अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः । एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥ अत्र स्नानं जपो होमो देवतानां च पूजनम् । उपवासस्तथा दानमेकैकं पावनं स्मृतम् ॥' इति सांवर्तैकवाक्यत्वात् । वस्तुतस्तु 'प्राच्यह्नात्रितयेऽथवोपवसनम्' इति दीपिकायां प्राचीति विशेषणात् 'त्रिरात्रोपोषितः' इति पूर्ववाक्य इवात्रापि प्रत्ययार्थस्य विवक्षा । 'सांवर्तकं संक्रान्त्यधिकरणकोपवासविध्यन्तम्' इति टीकायां सिद्धान्तितम् । २—बहुत्र–संक्रमणं विषुवद्वयं विशेषेणायनद्वयं व्यतीपातः जन्मभमभ्युदयश्चेत्येवं पाठ उपलभ्यते, तत्राभिशस्ता एव प्रमाणम् ३—जन्मर्क्षमभ्युदयश्च । ४—'नित्यानाह' इति पाठो युक्तः, व्याख्यातृभिरादृतत्वात् ।

संक्रमः, कन्यामीनधनुर्नृयुक्षु षडशीत्यास्य(ख्यं), तुलामेषयोः। प्रोक्तं तद्विषुवं, झषेऽयनमुदक्, कर्कोटके दक्षिणम्, इति। हर्यङ्घ्रिः=विष्णुपदं, नृयुक्=मिथुनम्। अत्र च पिण्डरहितं श्राद्धं कुर्यात्। तथा चापरार्के मात्स्ये-'अयनद्वितये श्राद्धं विषुवद्वितये तथा। संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते॥' इति। श्राद्धशूलपाणिस्त्वस्य निर्मूलत्वात्, समूलत्वेऽपि 'ततःप्रभृति संक्रान्तावुपरागादिपर्वसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृतेऽनि॥' इति मात्स्योक्तेर्ग्रहणाग्रहणवद्विकल्प एवेत्याह। तन्न; अस्य पार्वणानुवादकत्वेन पिण्डाविधायकत्वात्। पिण्डः व्यक्तिः। अन्यथैकपदे पिण्डानुवादे त्रित्वविधौ च वषट्कर्तुः प्रथमभक्षवद्वैरूप्यापत्तेः। तथा चोभयसमूलत्वे पिण्डरहितं पार्वणं कर्तव्यमित्युभयवचनयोरर्थः। त्रिपिण्डशब्देनैकोद्दिष्टव्यावर्तनमात्रम्।

मङ्गलकृत्येषु विशेषमाह ज्योतिर्निबन्धे नारदः—'त्याज्याः सूर्यस्य संक्रान्तेः पूर्वतः परतस्तथा। विवाहादिषु कार्येषु नाड्यः षोडश षोडश॥' इति। एतत्पुण्यकालोपलक्षणम्। 'भानोः संक्रान्तिभोगश्च कुलिकश्चार्धयामकः। इति ज्योतिःशास्त्रे वर्ज्येषु परिगणनात्।

अयनव्यतिरिक्तासु दशसु संक्रान्तिषु रात्रौ स्नानश्राद्धादि न कार्यम्। 'अह्नि संक्रमणे कृत्स्नमहः पुण्यं प्रकीर्तितम्। रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः॥ अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया। ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्॥ पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ॥' इति वृद्धवसिष्ठादिवचनैरहःपुण्यत्वोक्त्या, 'रात्रौ संक्रमणे भानोर्दिवा कुर्यात्तु तत्क्रियाम्। पूर्वस्मात्परतो वापि प्रत्यासन्नस्य तत्फलम्॥' इति वसिष्ठवचनाच्चार्थाद्रात्रौ स्नानादिनिषेधप्रतीतेः। यानि तु—'विवाहव्रतसंक्रान्तिप्रतिष्ठाऋतुजन्मसु। तथोपरागपातादौ स्नाने दाने निशा शुभा॥' इति, 'राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च॥' इत्यादीनि विष्णुगोभिलादिवचनानि,—तानि मकरकर्कसंक्रान्तिविषयाणि। 'मुक्त्वा मकरकर्कटौ' इति तयोर्दिवानुष्ठानस्य पर्युदस्तत्वादिति हेमाद्रिमाधवादयः। वस्तुतस्तु प्रागुक्तवचनेन तयोर्दिनद्वयपुण्यत्वादेरेव पर्युदासान्मकरकर्कटयोरपि 'स्नानं दानं परेऽहनि' इत्यादिभिरहःपुण्यत्वोक्तेः, अहःपुण्यत्वानुपपत्त्या कल्प्यरात्रिनिषेधस्य च प्रत्यक्षरात्रिविधिना बाधात्सर्वसंक्रान्तिषु रात्रावनुष्ठानविकल्पः; स च देशाचाराद्व्यवतिष्ठत इति युक्तः पन्थाः। अयनयोस्तु वक्तव्यो विशेषः श्रावणे माघे च वक्ष्यते। ज्योति-

१—ग्रहणाग्रहणवदिति—ज्योतिष्टोमस्यातिरात्राख्यसंस्थायां 'अतिरात्रे षोडशिनं गृह्णाति', 'नातिरात्रे षोडशिनं गृह्णाति' इत्युभयविधवचनप्राप्त्या यथा षोडशीसंज्ञपात्रग्रहणविकल्पस्तथात्रापि। २—तथा च—'वैधीं प्राप्तिमनूद्य पाक्षिकतन्निवृत्तौ पर्यवसानात्' इति टीकाकृदाशयः। ३—अर्थादुद्देश्यत्वविधेयत्वरूपवैरूप्यापत्तेः। अनेनैव पिण्डविधौ तदुद्देशेन त्रित्वविधौ चैकप्रसरताभङ्गापत्तिरिति टीका। ४—स च यथा—'वाराद्द्विघ्ने क्रमान्मन्दे घव्यूनः कुलिको निशि।' इत्यादिनोक्तः। ५—तथा चोक्तं मनुस्मृतौ (३।२८०)—'रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा। संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते॥' इति।

**निबन्धे गर्गः**–'यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् । तन्मासाभ्यन्तरे तस्य वैरक्लेशधनक्षयाः ॥ तगरसरोरुहपत्रै रजनीसिद्धार्थलोध्रसंयुक्तैः । स्नानं जन्मर्क्षगते रविसंक्रमणे नृणां शुभदम् ॥' **हेमाद्रौ**–'अह्नि चेद्रात्रियुग्मं स्याद्रात्रौ चेद्वासरद्वयम् । संक्रान्तिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु ॥' यत्तु **गौडाः**–'संक्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे । सायंसंध्यां न कुर्वीत कुर्वंश्च पितृहा भवेत् ॥' इति **कर्मोपदेशिन्यां व्यासोक्तेः** सायं पुण्यकाले संध्यानिषेधमाहुः,–तन्निर्मूलम् । अन्यच्च बहु वक्तव्यं विस्तरभीतेर्नोच्यते ॥ **इति संक्रान्तिनिर्णयः** ॥

सायंसन्ध्या-निषेधः।

**पक्षयुगजश्चान्द्रो मासः** । स द्वेधा—शुक्लादिरमान्तः, कृष्णादिः पूर्णिमान्तश्चेति । तथा च **त्रिकाण्डमण्डनः**–'चान्द्रोऽपि शुक्लपक्षादिः, कृष्णादिर्वेति च द्विधा ।' इत्युक्त्वा देशभेदेन तद्व्यवस्थामाह–'कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन । येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥' इति । विन्ध्यस्य दक्षिणे कृष्णादिनिषेधादुत्तरतो द्वयोरभ्यनुज्ञा गम्यते । तत्रापि शुक्लादिर्मुख्यः, कृष्णादिर्गौणः; शास्त्रेषु चैत्रशुक्लप्रतिपद्येव चान्द्रसंवत्सरारम्भोक्तेः । तदुक्तं **दीपिकायाम्**–'चान्द्रोऽब्दो मधुशुक्लगप्रतिपदारम्भः' इति । न हि ये कृष्णादिं मन्यन्ते, तेषां वत्सरारम्भो भिद्यते । अतः शुक्लादिर्मुख्यः, कृष्णादिना मलमासासंभवाच्च । चन्द्रस्य सर्वनक्षत्रभोगेन नाक्षत्रो मासः । **सावनादीनां व्यवस्थोक्ता हेमाद्रौ ब्रह्मसिद्धान्ते**–'अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ॥' अत्र ब्राह्मणादीनां यत्र कर्मविशेषे वचनान्तरेण 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिवन्मास उक्तः । तत्र दर्शान्तत्वमात्रं नियम्यते, न तु सर्वकर्मसु दर्शान्त एवेति; वृष्ट्याद्यर्थसौभरे हीषादिनिधननियमवद्विधिलाघवात् । त्रैवर्णिकानां सर्वकर्मसु मासविशेषविधेः सावनादीनां शूद्रानुलोमादिपरत्वापत्तेश्चेति **गुरुचरणाः** ॥ **ज्योतिर्गर्गः**–'सौरो मासो विवाहादौ, यागादौ सावनः स्मृतः । आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥' **ऋष्यशृङ्गः**–'विवाहव्रतयज्ञेषु सौरं मानं प्रशस्यते । पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥' **स्मृत्यन्तरे**–'एकोद्दिष्टविवाहादौ ऋणादौ सौरसावनौ ।' **ज्योतिर्गर्गः**–'आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा । सावनेनैव कर्तव्या शत्रूणां चाप्युपासना ॥' **विष्णुधर्मे**–'नक्षत्रसत्राण्ययनानि चेन्दोर्मासेन कुर्याद्भगणात्मकेन ।' इति । **ब्राह्मे**—

चान्द्रादिमास-व्यवस्थाः

सावनादिमास-व्यवस्था।

---

१—अस्यार्थो धर्मसिन्धौ-'विषुवायनयोरह्नि संक्रमे पूर्वापररात्रौ तदह्नि चाध्यापनाध्ययने वर्जयेत् । रात्रिसंक्रमे पूर्वापरदिनयोस्तद्रात्रौ वर्जयेत् । एवं पक्षिणी संक्रान्तिः । द्वादशप्रहरपर्यन्तमनध्यायादिकमिति तात्पर्यम् ।' इति श्रीमत्काशीनाथोपाध्यायैरुक्तः । २—'मस्यन्ते परिमीयन्ते स्वकलावृद्धिहानितः । मासा एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः ॥'', 'इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः । अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ' इति शुक्लादिमाससामान्यलक्षणम् । ३—वृष्ट्याद्यर्थमित्यत्रादिशब्देन वृष्ट्यर्थं अन्नाद्यकामार्थं स्वर्गार्थं च सौभरे=सौभराख्यसाम्ना क्रियमाणायां स्तुतौ हीषादि(=हीष् ऊर्क् ऊ एषां)निधननियमवत्; निधनं=साम्नोऽन्तिमभागस्तस्य नियमो यथा-वृष्ट्यर्थं हीष् निधनं, अन्नाद्यर्थं ऊर्क्, स्वर्गार्थं ऊ इति यथा तद्वद्विधिलाघवात् ।

'तिथिकृत्ये च कृष्णादिं, व्रते शुक्लादिमेव च। विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशत् ॥'

अथ **मलमासः**–तत्रैकमात्रसंक्रान्तिरहितः सितादिश्चान्द्रो मासो मलमासः। एकमात्रसंक्रान्तिराहित्यमसंक्रान्तत्वेन संक्रान्तिद्वयसत्त्वेन च भवतीति मलमासो द्वेधा–अधिमासः, क्षयमासश्चेति। तदुक्तं **काठकगृह्ये**–'यस्मिन्मासे न संक्रान्तिः, संक्रान्तिद्वयमेव वा। मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः ॥' इति। **सत्यव्रतो**ऽपि–'राशिद्वयं यत्र मासे संक्रमेत दिवाकरः। नाधिमासो भवेदेष मलमासस्तु केवलः ॥' इति। अधिकमासस्य कालनियममाह **वसिष्ठः**–'द्वात्रिंशद्भिर्मितैर्मासैर्दिनैः षोडशभिस्तथा। घटिकानां चतुष्केण पतत्यधिकमासकः ॥' इति। एतच्च सावनादिमानेन संभवार्थं, न तु नियमार्थम्; अन्यथा षोडशदिनाधिकद्वात्रिंशन्मासानन्तरं कृष्णपक्षनियमेन शुक्लादित्वभङ्गापत्तेः। तेन न्यूनाधिककाले मलमासपातेऽपि न दोषः। अत एवोक्तं **माधवीये**–'मासे त्रिंशत्तमे भवेत्' इति। क्षयस्यापि **ज्योतिःशास्त्रे**–'असंक्रान्तिमासोऽधिमासः स्फुटं स्यात्, द्विसंक्रान्तिमासः क्षयाख्यः कदाचित्। क्षयः कार्तिकादित्रये, नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च ॥' एकः क्षयात्पूर्वं, परतश्चैक इत्यधिमासद्वयं भवतीत्यर्थः।

अत्र **विशेषमाह जाबालिः**–'मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत्। प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥' इति। उत्तरे एव कालाधिक्यं, न पूर्वस्मिन्नित्यर्थः। यत्तु **ब्रह्मसिद्धान्ते**–'चैत्रादर्वाङ् नाधिमासः, परतस्त्वधिको भवेत्।' इति,–तत्र चैत्रात्पूर्वमसंक्रान्तद्वये पूर्वो नाधिकः, किंतु पर इत्यर्थः। यच्च **ज्योतिःसिद्धान्ते**–'धटकन्यागते सूर्ये वृश्चिके वाथ धन्विनि। मकरे वाथ कुम्भे वा नाधिमासो विधीयते ॥' इति,–तद्वृश्चिकादिचतुष्टये मलमासे सति पूर्वं तुलाकन्यागते सूर्ये क्षयपूर्वभाव्यधिमासस्य [1]कालाधिक्यमात्रनिषेधार्थं, न त्वधिकमासस्य; 'दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्। नपुंसकत्वं भवतीत्येष शास्त्रविनिश्चयः ॥' इति **हेमाद्रौ विष्णुधर्म**विरोधात्। मलमासेऽष्टकादिनिषेधानुपपत्तेश्च[2] ॥

**क्षय[3]स्यागमनकाल** उक्तः **सिद्धान्तशिरोमणौ**–'गतोऽब्ध्यद्रिनन्दै[4]र्मिते शाक–

---

१—'कालाधिक्यनिषेधार्थं न त्वधिकमात्रस्य' इत्यपि पाठः। २—'मकरे वाऽथ कुम्भे वेति दृष्टान्तार्थम्, प्राप्त्यभावात्' इत्यधिकं सर्वत्र। ३—सिद्धांतशिरोमणिकृतमिताक्षरायां 'कुवेदेन्दुवर्षैः' इत्यादिस्ववाक्यं कालावधिद्वयपरतयैव व्याख्यातं। तद्दृष्ट्वा माधवमदनरत्नादिभिः पूर्वस्मात् क्षयमासात् कुवेदेन्दु(१४१)परिमितैर्वर्षैर्द्वितीयः क्षयमासो भवति। क्वचित् गोकुभिः (१९) एकोनविंशतिपरिमितैर्वर्षैर्भवतीत्युक्तं, तथापि शिरोमण्युदाहृतचतुर्थक्षयमासस्य तृतीयात्क्षयमासाद्द्वाविंशत्यधिकशतवर्षैः(१२२)जातत्वेन नियमद्वयस्यापि व्यभिचारात्। अत एव मणिमरीचाख्यशिरोमणिटीकायां गोकुभिर्न्यूनः कुवेदेन्दुवर्षैश्चतुर्थः क्षयमास इति तृतीयावधिस्वीकारेण समाहितं। किंच वर्षत्रयाधिकषोडशशतवर्षपरिमितशककालेऽस्मदादिभिः स्मर्यमाणः क्षयमासः शिरोमण्युदाहृतचतुर्थक्षयमासात् सपादशतद्वयवर्षैः(२२५)जातः। तत्र पूर्वोक्तनियमस्य कथमप्युक्तिसंभवाभावात्। तस्मात् ग्रहगतिविशेषात् यदा यस्मिन्दर्शान्तचान्द्रमासे संक्रान्तिद्वयं भवति तदा स क्षयमास इत्येव वक्तव्यमिति पुरुषार्थचिन्तामणिकारस्याभिप्रायः। ४—'गजे' इति पाठः।

काले तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः । गजाद्र्यग्निभूमिस्तथा प्रायशोऽयं कुवेदेन्दुवर्षैः क्वचिद् गोकुभिश्च ॥' इति । अब्धयश्चत्वारः ४, अद्रयः सप्त ७, नन्दा नव ९, एषां प्रातिलोम्येन पाते ९७४। तैर्मिते वर्षे कश्चित् क्षयमासः पूर्वं जात इत्यर्थः । तिथयः पञ्चदश १५, ईशा एकादश ११, ११११५। एवंमिते याते कश्चिद्भविष्यतीत्यर्थः । अङ्गा ६, ऽक्ष ५, सूर्याः १२, एकत्र १२५६। गजाः ८, अद्रयः ७, अग्नयः ३, भूः १, एकत्र १३७८। कुः १, वेदाः ४, इन्दुः १, एकत्र १४१। गावः ९, कुः १, एकत्र १९ । एतैर्मिते वर्षे याते कश्चिद्भविष्यतीत्यर्थः ॥

**अथ मलमासे कार्याकार्यं** निरूप्यते । तत्र **जाबालिः**–'नित्यनैमित्तिके कुर्यात्छ्राद्धं कुर्यान्मलिम्लुचे । तिथिनक्षत्रवारोक्तं, काम्यं नैव कदाचन ॥' अयं च काम्यनिषेध आरम्भसमाप्तिविषयः । 'असूर्या नाम ये मासा न तेषु मम संमतः । व्रतानां चैव यज्ञानामारम्भश्च समापनम् ॥' इति तेनैवोक्तत्वात् । असूर्याः=अधिकमासा इत्यर्थः । तत्र 'मण्डलं तपते रवेः' इति वचनात् । कारीर्यादेः[1] काम्यस्य त्वारम्भसमाप्ती भवत एवेत्यादिरित्यन्यत्र विस्तरः । **काठकगृह्येऽपि**—'मलेऽनन्यगतिं[2] कुर्यान्नित्यां नैमित्तिकीं क्रियाम् ।' इति । तानि नैमित्तिकानि **दीपिकायामुक्तानि**–'यन्नैमित्तिकमग्निनश्चनुगताग्न्याधानमर्चासु वा संस्कारादिविलोपने सति पुनः प्रोक्तं प्रतिष्ठादिकम् ।' इति; गत्यन्तरयुतं तु सोमादि हेयमेव ॥

**तत्र कर्तव्यान्युक्तानि कालादर्शे**–'द्वादशाहसपिण्डान्तं कर्म, ग्रहणजन्मनोः । सीमन्ते पुंसवे श्राद्धं, द्वावेतौ, जातकर्म च ॥ रोगशान्तिरलभ्ये च योगे श्राद्धं व्रतानि च । प्रायश्चित्तं निमित्तस्य वशात्पूर्वं परत्र वा ॥ अब्दोदकुम्भमन्वादिमहालययुगादिषु[3] । श्राद्धं दर्शेऽप्यहरहःश्राद्धमूनादिमासिकम् ॥ मलिम्लुचान्यमासेषु मृतानां श्राद्धमाब्दिकम् । श्राद्धं तु पूर्वदृष्टेषु तीर्थेष्वेवं युगादिषु ॥ मन्वादिषु च यद्दानं दानं दैनंदिनं च यत् । तिलगोभूहिरण्यानां संध्योपासनयोः क्रिया ॥ पर्वहोमश्चाग्रयणं साग्नेरिष्टिश्च पर्वणि । नित्याग्निहोत्रहोमश्च देवतातिथिपूजनम् ॥ स्नानं च स्नानविधिनाप्यभक्ष्यापेयवर्जनम् । तर्पणं च निमित्तस्य नित्यत्वादुभयत्र च ॥' इति । एतौ=पुंसवनसीमन्तौ । एतच्च गर्भाधानाद्यन्नप्राशनान्तसंस्कारोपलक्षणम्; तदुक्तं **दीपिकायाम्**–'गर्भाधानमुखं च चौलविधितः प्राग्जातयागं विना कृच्छ्रेष्वाग्रयणं गजेन्द्रपुरतश्छाया मघानङ्गयोः । तीर्थेन्दुक्षययोश्च पित्र्यमधिके मास्येवमाद्याचरेत्' इति । अलभ्ययोगेऽर्धोदयपद्मकादौ काम्यान्यपि व्रतादीनि कार्याणीत्यर्थः । पूर्वं परत्र=मले शुद्धे चेत्यर्थः । 'महालय'शब्देन मघात्रयोदश्युच्यते इति

१—कारीरिर्वृष्ट्यर्थं क्रियमाणो यागः । आदिशब्देन राक्षोघ्नाभिचारादयो ज्ञेयाः । २—न विद्यते अन्या क्रियाचरणादितरा गतिर्मार्गो यस्याः सा तां; तथा चायमर्थः—यस्या अन्यमासे आचरणात् कालातिपत्तिजनितप्रत्यवायापत्तिस्तामिति । ३—कृष्णंभट्टस्तु "अब्दोदकुम्भमन्वादि महालययुगादिषु" इति पाठमाहत्य, "अब्दमम्बुघटं दद्यादन्नं चापि सुसञ्चितम् । संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम्" इति कौथुमिवचनात् 'त्रिंशत्सोदकुम्भान्नदानानि' इति व्याख्यातवान् ।

[1]**माधवः** । दर्शश्राद्धं मलेऽपि कार्यम् । **यत्तु ऋष्यशृङ्गः**–'संवत्सरातिरेकेण मासो यः स्यान्मलिम्लुचः । तस्मिंस्त्रयोदशे श्राद्धं न कुर्यादिन्दुसंक्षये ॥' इति,–तत् काम्यदर्शश्राद्धविषयम्; 'काम्यं नैव कदाचन' इति वचनात् । दर्शे च काम्यं श्राद्धं 'कन्यां कन्यावेदिनश्च' इत्यादिना **याज्ञवल्क्येनोक्तम्** । नित्यं तु मलेऽपि भवत्येव । 'दर्शेऽप्यहरहः श्राद्धं, दानं च प्रतिवासरम् । गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे ॥' इति **मात्स्योक्तेरिति हेमाद्र्यादयः** । **दिवोदासीयेऽपि**–'अनिन्दुरिन्दुपूर्णा च हरिवारो बुधाष्टमी । नाधिमासे परित्याज्याः सीमन्तान्नाशने शिशोः ॥' इति । अनिन्दुः=दर्शः । द्विविधमप्यमाश्राद्धं न कार्यमित्यपरार्कः । 'तत्र यद्विहितं कर्म उत्तरे मासि कारयेत् ।' इत्युक्तेः 'षष्ट्या तु दिवसैर्मासः' इति शुद्धमासकरणेऽपि शास्त्रार्थोपपत्तेर्दर्शश्राद्धं मले न कार्यमिति **प्राचीनगौडाः, शूलपाणिश्च** । **संवत्सरप्रदीपेऽपि**–'एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् । दर्शश्राद्धं तदादौ स्यान्न[2] परत्र मलिम्लुचे ॥' अत्रापि [3]प्राग्वद्व्यवस्था । **यद्यपि कालादर्शे** सर्वं वार्षिकं मासद्वये कार्यमित्युक्तं, तथापि **हेमाद्रिमाधवापरार्कादि**मतात् [4]प्रथमवार्षिकं त्रयोदशे मलमासे; द्वितीयाद्याब्दिकं तु शुद्धमासे एव कार्यम् । 'असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा ॥' इति **हारीतोक्तेः** । 'आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे । [5]त्रयोदशे तु संप्राप्ते कुर्वीत पुनराब्दिकम् ॥' इति **स्मृत्यन्तरोक्तेश्च**, पुनराब्दिकं द्वितीयादिवार्षिकं त्रयोदशे मासेऽतीते चतुर्दशाद्यदिने कुर्यादित्यर्थः । **यत्तु सत्यव्रतः**–'वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि । मलमासे न तत्कार्यं व्याघ्रस्य वचनं यथा ॥' इति,–तद्द्वितीयादिवार्षिकविषयम्; 'आब्दिकं प्रथमं यत्स्यात्त-

---

१—अत्र 'माधव'ग्रहणेनारुचिः सूचिता । तद्बीजमाह टीकाकारः—'महालयशब्दस्य मघात्रयोदश्यां लक्षणा व्यर्था । 'वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् । राज्याभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते ॥' इति भृगूक्तनिषेधस्य च कालातिपन्नमहालयविषयकत्वात् । यतः 'संसर्प आश्विनादिषट्क एव' इति भूतेऽतीतो महालयस्तत्र प्राप्तोऽपि न कार्यः, किंतु तदुत्तरगौणतत्काल एवेति । यदि तु 'भाद्रपदोऽपि संसर्पः' इति मतम्, तदा प्रत्याब्दिकादिवत् स्वकालप्राप्तो महालयो भवत्येव । एवमेव 'तथाधिमाससंसर्पमलमासादिषु द्विज । प्रथमे या कृतिर्न स्यात्' इति 'संसर्प'पदोपादानसंगतिः । आश्विनस्यैव संसर्पत्वे तत्रोपाकर्मप्राप्तिरेव न निषेधानुपपत्तेः' इति । वस्तुतो माधवस्य लक्षणाबीजं—'अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् । पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥' इत्यत्र मनुस्मृतौ (३।२७४) टीकायां "वर्षासु मघायुक्तत्रयोदशी पूर्वोक्ता विवक्षिता, तत्रापि–'प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं हि कर्तव्यं मधुना पायसेन च ॥' इति शङ्खवचनात् भाद्रकृष्णत्रयोदशी पूर्वत्रेह च गृह्यते" इति कुल्लूकभट्टेनोक्तत्वात् तत्पक्षे एव महालयप्राप्तिरूपमिति भाति । २—अत्र 'मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः । चैत्राद्यः स ज्ञेयः पूर्तिर्द्वित्वेऽधिमासोऽन्त्यः ॥' इति वचनान्तरमुदाहृतं टीकाकृता । तन्मूलकमेवेदं मूलोक्तमित्यपि प्राह स एव । ३—प्राग्वत्=नित्यकाम्यभेदेनेति भावः । ४—'प्रथमाब्दिकं मलमासे' इति पाठः ५—आद्याब्दिकं द्वादशे मासे पूर्णे सति मलिम्लुचे, त्रयोदशमासे एव कुर्वीतेत्याशयः । 'चतुर्दशे तु संप्राप्ते' इत्यपि पाठः क्वचित् ।

त्कुर्वीत मलिम्लुचे ॥' इति पूर्वोक्तवचनात् । तेन यत्र द्वादशं मासिकं शुद्धमासे भवति, तत्र त्रयोदशेऽधिके एवाब्दिकं कार्यम् । यत्र त्वधिकमध्ये द्वादशं मासिकं, तत्र तस्य द्विरावृत्तिं कृत्वा चतुर्दशे शुद्धे एव प्रथमाब्दिकमिति निष्कर्षः । तेन द्वितीयादि शुद्धमासे एव । **पृथ्वीचन्द्रोदये दिवोदासीये मदनपारिजाते** चैवम् । मलमासमृतानां तु यदा स एवाधिकः स्यात्तदा तत्रैव प्रतिसांवत्सरिकं कार्यम्; यथाह **पैठीनसिः**—'मलमासे मृतानां तु श्राद्धं यत्प्रतिवत्सरम् । मलमासेऽपि कर्तव्यं नान्येषां तु कथंचन ॥' इति । **हेमाद्रौ व्यासोऽपि**—'मलमासमृतानां तु सौरं मानं समाश्रयेत् । स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु ॥' [1]अत्राधिकमृतस्य न द्वितीयाद्यब्देऽपि सौरविधिः । द्वितीयादावन्याधिके वा पूर्वनियमविधिवैरूप्यात् । किंतु प्रथमाब्दिकस्य मले नियमात् । सत्यव्रतेन तद्भिन्नस्य सर्वस्याधिके निषेधे प्राप्ते प्रतिप्रसवमात्रं लाघवात् । अतो न द्वितीयादौ सौरमासप्रसङ्गः । 'चान्द्रमिष्टं तथाब्दिके । मासपक्षतिथिस्पष्टे' इत्यादिविरोधाच्च । यत्तु **वृद्धवसिष्ठः**—'श्राद्धीयाहनि संप्राप्ते अधिमासो भवेद्यदि । मासद्वयेऽपि कुर्वीत श्राद्धमेवं न मुह्यति ॥' यच्च **व्यासः**—'उत्तरे देवकार्याणि पितृकार्याणि चोभयोः' इति,—तन्मासिकादिविषयम् । 'यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम् । मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ॥' इति **स्मृतिचन्द्रिकोक्तेः** । तैर्थिकं=तीर्थश्राद्धं, [2]तच्च मासद्वयेऽपि कार्यमिति **त्रिस्थलीसेतौ भट्टाः** । केचित्तु—'प्रतिमासं मृताहे च श्राद्धं यत्प्रतिवत्सरम् । मन्वादौ च युगादौ च तन्मासोरुभयोरपि ॥' इति **मरीचिवचनात्**, 'वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि । मासद्वयेऽपि तत्कुर्याद्व्याघ्रस्य वचनं यथा ॥' इति **गालवोक्तेश्च** प्रत्याब्दिकं मासद्वये कार्यमित्याहुः,—तत्तुच्छम्; 'प्रतिमासं मृताहे क्रियमाणं मासिकम्, प्रतिसंवत्सरं क्रियमाणं [3]कल्पादिश्राद्धम्' इति **मरीचिवचसो मदनरत्नेन** व्याख्यानात् । **गालवीयस्य** च मासद्वयात्मके क्षयमासे इति **माधवेन** व्याख्यानात् । यच्च कैश्चिदुक्तं—प्रथमाब्दिकं मासद्वये कार्यम्, 'आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे । त्रयोदशे च संप्राप्ते कुर्वीत पुनराब्दिकम् ॥' इति **यमोक्तेरिति**,—तदपि चिन्त्यम् । पुनराब्दिकं द्वितीयादिवार्षिकं त्रयोदशेऽतीते चतुर्दशे कुर्यात् । अन्यथा—'सांवत्सरं न वर्धेत श्राद्धं तत्र मृतेऽहनि ।' इति **पैठीनसिविरोधः** स्यादिति **हेमाद्रौ पृथ्वीचन्द्रोदये** च । एतेन 'न वर्धेत न च्छिन्द्यात्, शुद्धेऽपि कुर्यादेव' इत्यनन्तभट्टव्याख्या मानाभावात्परास्ता । [4]पूर्वव्याख्यायां तु **हारीतीये** प्रथमग्रहणमेव मानम् । यदपि **निर्णयामृते**

१—'अत्राधिकमृतस्य' इत्यत आरभ्य 'मासपक्षतिथिस्पष्टे इत्यादिविरोधाच्च' इत्यन्तः पाठये कृष्णंभट्टीये न लभ्यते । २—'तच्च दैवात्तीर्थप्राप्तौ मासद्वयेऽपि' इत्यधिकः पाठः । ३—अत्र वचनान्तरमप्युक्तं दीपिकायाम्—'स्युः पक्षद्वयगाः क्रमात्प्रतिपदाद्याश्चैत्रमासक्रमाद् भूतौ माधवगौ मधौ तु मदनौ ज्येष्ठस्थिते पर्वणि । श्राद्धे त्रिंशदमी शुभाः, शुभतराः कल्पादयः शुक्लगाः' इति । ४—'असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमम्' इति हारीतवाक्ये 'वत्सरान्तरायवार्षिकश्राद्धस्य शुद्धमासकर्तव्यत्व एवाब्दिकस्य प्रथमत्वं विशेषणं युज्यते' इति तदाशयः ।

**पूर्वोक्तकालादर्श**वचनात् मलमासे श्राद्धदिनस्य वन्ध्यत्वनिरासार्थं पित्रुद्देशेन ब्राह्मणान् भोजयित्वा शुद्धमासे सपिण्डकं श्राद्धं कुर्यात् । 'पिण्डवर्जनसंक्रान्ते संक्रान्तौ पिण्डसंयुतम् । प्रतिसंवत्सरं श्राद्धमेवं मासद्वयेऽपि च ॥' इति **वृद्धपराशरोक्ते**रिति,–तदपि चिन्त्यम्; पूर्वोक्तवचनस्य क्षयपूर्वभाव्यधिकमासविषयत्वात् । तत्र हि मासद्वये श्राद्धमुक्तम् । तदाह **सत्यतपाः**–'एक एव यदा मासः संक्रान्तिद्वयसंयुतः । मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते ॥' इति । मासद्वयगतं=पूर्वासंक्रान्तगतं, क्षयगतं च । मलमासे=क्षयमासे । अपिशब्दात् तत्पूर्वाधिमासे चेति **हेमाद्रिः** । **दीपिका**पि–'तत्राक्सङ्गचधिमासको यदि भवेत्तत्रत्यसांवत्सरं तस्मिन् शुद्धतया क्षये च वचनात्कुर्याद्द्वयोः कोविदः ।' इति; **कालादर्शो**ऽप्येतद्विषय एवेत्यलं बहुना ॥

मलमासे वर्ज्यानि ।

**मलमासे वर्ज्यान्युक्तानि कालादर्शे**–'अनित्यमनिमित्तं च दानं च महदादिकम् । अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणम् ॥ देवारामतडागादिप्रतिष्ठा मौञ्जिबन्धनम् । आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः ॥ राजाभिषेकः प्रथमश्चूडाकर्म व्रतानि च । अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम् ॥ स्नानं विवाहो नामातिपन्नं देवमहोत्सवः । व्रतारम्भसमाप्ती चाकाम्यं काम्यं च पाप्मनाम्[1] ॥ प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् । उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् ॥ अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः । ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम् ॥ दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः । पूर्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकम् ॥' इति । अत्र मूलवचनानि **हेमाद्रिमाधवादिभ्यो** ज्ञेयानि । **दिवोदासीये**ऽपि–'यात्रोत्सवं च देवादिशपथं दिव्यमेव च । मलमासे न कुर्वीत **व्यासस्य** वचनं यथा ॥' इति ॥

अयं निर्णयः **क्षयमासे**ऽपि ज्ञेयः । 'रविसंक्रमहीने यो वर्ज्यावर्ज्यविधिः स्मृतः । स एव तु द्विसंक्रान्ते मलमासेऽप्युदीरितः ॥' इति **काठकगृह्योक्तेः** । **क्षयमासमृतानां प्रत्याब्दिके विशेषो हेमाद्रौ**–'तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तथोत्तरः । मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥' आब्दिकवद्दर्शापनेऽपि ज्ञेयम्[2] । यन्मलमासे वर्ज्यमुक्तं, तच्छुक्रगुर्वोरस्तादिष्वपि ज्ञेयम् । तदाह

यन्मलमासे वर्ज्यं तच्छुक्रगुर्वस्तादावपि ।

**बृहस्पतिः**–'बाले वा यदि वा वृद्धे शुक्रे वाऽस्तंगते गुरौ । मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥' इति । 'अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे । मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥' आवृत्ततीर्थे दोषाभावमात्रं, न तु फलमिति **वाचस्पति**-

---

१—'च कर्म काम्ये च पाप्मनाम्' इति कृष्णंभट्टीसंमतः पाठः, 'काम्ये' इति द्विवचनान्तं पूर्वान्वयि इति ज्ञेयम् । 'च कर्म काम्ये च पाप्मनां' इति पाठे 'काम्ये' इति द्विवचनान्तं पूर्वान्वयि । २— एवं सति यत्–'मासः संक्रान्तिहीनोऽधिक इति कथितः शीघ्रमन्दप्रचारैः संसर्पोऽहस्पतिः स्यात्समविषमतया चालनं तत्क्षयस्य । पूर्वैश्चन्द्रार्कयोगैर्विरहितरविसंक्रान्तितश्चालनं स्याद्वक्रस्यार्कस्य मासे यदि न चलति वै मासयुग्मं विचिन्त्यम् ॥' इति वटेश्वरसिद्धान्ते मासयुग्मचिन्ताभिधानं तदशुद्धमेव' इति टीकाभिप्रेतम् ।

**मिश्राः** । तन्न; असति बाधके फलहेतुत्वाक्षतेः । **लल्लोऽपि**–'नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्राव्रतनियमविधिः[1] कर्णवेधस्तु दीक्षा । मौञ्जीबन्धोऽङ्गनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च ॥' इति । दीक्षा=यागदीक्षा, आगमदीक्षा[2] च । तथा–'उद्यानचूडाव्रतबन्धदीक्षाविवाहयात्राश्च वधूप्रवेशः । तडागकूपत्रिदशप्रतिष्ठा बृहस्पतौ सिंहगते न कुर्यात् ॥' **दिवोदासीये**–'गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे । गृहकर्म व्रतं यात्रां मनसापि न चिन्तयेत् ॥' **अस्यापवादस्तत्रैव ब्राह्मे**–'मुण्डनं चोपवासश्च गौ[3]-तम्यां सिंहगे गुरौ । कन्यागते तु कृष्णायां न तु तत्तीरवासिनाम् ॥' तथा–'आद्या सा गौतमी गङ्गा, द्वितीया जाह्नवी स्मृता । सर्वतीर्थफलं स्नानाद् गौतम्यां सिंहगे गुरौ ॥' **संहिताप्रदीपे**–'सप्तसप्तरात्रं गुरुशुक्रयोश्च बालत्वमह्नां दशकं च वार्धर्यम् । वृद्धौ सितेज्यावशुभौ शिशुत्वे शस्तौ यतस्तावुपचीयमानौ ॥' **वसिष्ठः**–'अतिचारगते जीवे वर्जयेत्तदनन्तरम् । व्रतोद्वाहादिकार्येषु अष्टाविंशतिवासरान् ॥'

सिंहस्थे कन्यागते वा गुरौ गोदावरी-कृष्णा स्नानम् ।

**बाल्यादिलक्षणमुक्तं ब्रह्मसिद्धान्ते**–'रविणासत्तिरन्येषां ग्रहाणामस्त उच्यते । ततोऽर्वाग्वार्धकं प्रोक्तमूर्ध्वं बाल्यं प्रकीर्तितम् ॥' इति । **बाल्यादिपरिमाणं च वृत्तशते**–'बालः शुक्रो दिवसदशकं, पञ्चकं चैव वृद्धः, पश्चादह्नां त्रितयमुदितः, पक्षमैन्द्यां क्रमेण । जीवो वृद्धः शिशुरपि तथा, पक्षमन्यैः शिशू तौ, वृद्धौ प्रोक्तौ दिवसदशकं, चापरैः सप्तरात्रम् ॥' पश्चिमत उदये दशदिनानि बालः, अस्ते पञ्चदिनानि वृद्धः, पूर्वतो दिनत्रयं बालः, पक्षं च वृद्ध इत्यर्थः । जीवः=गुरुः । अन्यत्र त्वन्यथोक्तम्–'प्राक्पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः । विपरीते तु वृद्धत्वं, तद्वदेव गुरोरपि ॥' इति । **एषां च पक्षाणां व्यवस्थामाह मिहिरः**–'बहवो दर्शिताः काला ये बाल्ये वार्धकेऽपि वा । ग्राह्यास्तत्राधिकाः, शेषा देशभेदादुतापदि ॥' इति । **देशभेदश्च मदनरत्ने गार्ग्यः**–'शुक्रो गुरुः प्राक्च पराक्च बालो विन्ध्ये दशावन्तिषु सप्तरात्रम् । वङ्गेषु हूणेषु च षट् च पञ्च, शेषे च देशे त्रिदिनं वदन्ति ॥' इति ।

गुरुशुक्रयोर्बाल्य-वृद्धत्वविचारः ।

**अस्तादेरपवादः काशीखण्डे**–'न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये ।' **त्रिस्थलीसेतौ वायवीये**–'गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये । सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥' ग्रहणद्वये=तन्निमित्तककुरुक्षेत्रयात्रादानादावित्यर्थः । तदाह **त्रिस्थलीसेतौ लल्लः**–'उपप्लवे शीतलभानुभान्वोरर्धोदये वै कपिलाख्यषष्ठ्याम् । सुरासुरेज्यास्तमयेऽपि तीर्थे यात्राविधिः संक्रमणे च शस्तः ॥' ['[4]न मूढदोषो न च रात्रिदोषो न चाधिमासे न मृतिर्न सूतिः ॥' एवमप्युत्तरार्धं पठन्ति ।'] इत्यलं बहुना ।

अस्तापवादः ।

---

१—'प्रतियमनविधिः' इति कृष्णंभट्टीये पाठः। २—अत्र 'न त्वागमदीक्षा ।' इति कृष्णंभट्टीसंमतः पाठः, 'तस्याः श्रौतस्मार्तकर्मान्तःप्रवेशायोगात् । तत्र कालान्तरस्य वक्तव्यत्वात् ।' इति तदाशयः । ३—गोदावर्याम् । ४—अयं पाठः क्वचिदुपलभ्यते ।

**मलमासे च व्रतविशेष उक्तो हेमाद्रौ पाद्मे**–'अधिमासे तु संप्राप्ते गुडसर्पिर्युतानि च । त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने ॥ साज्यानि गुडमिश्राणि अधिमासे नृपोत्तम । अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः ॥[1] उद्दिश्यापूपदानेन पृथ्वीदानफलं लभेत् । त्रयस्त्रिंशदपूपान्नं कांस्यपात्रे निधाय च ॥ सघृतं सहिरण्यं च ब्राह्मणाय निवेदयेत् । विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः ॥ अपूपान्नप्रदानेन मम पापं व्यपोहतु । नारायण जगद्बीज भास्करप्रतिरूपक ॥ व्रतेनानेन पुत्रांश्च संपदं चाभिवर्धय । यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनम् । शङ्खः करतले यस्य स मे विष्णुः प्रसीदतु ॥ कलाकाष्ठादिरूपेण निमेषघटिकादिना । यो वञ्चयति भूतानि, तस्मै कालात्मने नमः ॥ कुरुक्षेत्रमयं देशः, कालः पर्व, द्विजो हरिः । पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम ॥ मलानां च विशुद्ध्यर्थं पापप्रशमनाय च । पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर ॥ मन्त्रेणानेन यो दद्यात्त्रयस्त्रिंशदपूपकान् । प्राप्नोति विपुलां लक्ष्मीं पुत्रपौत्रादिसंपदः ॥' इति ॥

इति निर्णयसिन्धौ मलमासनिर्णयः ॥

**पक्षनिर्णयस्तु**–'दैवे मुख्यः शुक्लपक्षः, कृष्णः पित्र्ये विशिष्यते ।' इति **माधवेनोक्तः** ।

**अथ तिथिनिर्णयः** । तत्र तिथिर्द्वेधा–शुद्धा विद्धा च । दिने[2] तिथ्यन्तरसंबन्धरहिता शुद्धा । [3]तत्सहिता विद्धा ॥ तत्र शुद्धायामसंदेहाद्विद्धा **निर्णीयते** । तत्र सामान्यतो वेधमाह **माधवीये पैठीनसिः**–'पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥' इति । **हेमाद्रिमदनरत्नादौ** तु द्विमुहूर्तोऽप्युक्तः–'उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥' इति **विष्णुधर्मोक्तेः** । द्विमुहूर्तत्वं चानुकल्पः । 'द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी ।' इति **दक्षेणापिशब्दोक्तेः** । अयं वेधः प्रातरेव ; सायं तु त्रिमुहूर्तो वेध एव । 'यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः । सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्तैव या भवेत् ॥' इति **स्कान्दोक्तेः** । **दीपिकापि**–'त्रिमुहूर्तगा तु सकला सायम्' इति । यानि तु–'व्रतोपवासस्नानादौ घटिकैकापि या भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके ॥' इत्यादीनि **स्कान्दादिवचनानि**,–तानि वैश्वानराधिकरणन्यायेनावयवस्तुत्या त्रिमुहूर्तप्रशंसापराणि । **तिथिविशेष वेधविशेषः स्कान्दे**–'नागो[6] द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥' इति । अयं चोपवासा[7]तिरिक्तविषय इति वक्ष्यते ॥ **इति वेधः** ॥

तिथिवेधादिनिर्णयः ।

१—रुद्रा एकादश प्रोक्ता अष्टौ तु वसवः स्मृताः । आदित्या द्वादश प्रोक्ता वषट्कारः प्रजापतिः ॥ इत्येता देवताः ख्यातास्त्रयस्त्रिंशत्' इत्युक्ताः । २—दिने=दिवसे, न त्वहोरात्रे इत्यर्थः । ३—'तद्रहिता' इति पाठः । ४—द्विमुहूर्तत्वनिवेशासंभवे त्रिमुहूर्तवत्तयैव पूर्णत्वे च विष्णुरहस्योक्तिर्यथा—'यां प्राप्यास्तमुदेत्यर्कः सा चेत् स्यात्त्रिमुहूर्तगा । धर्मकृत्येषु सर्वेषु सम्पूर्णां तां विदुर्बुधाः ॥' इति । ५—अयं न्यायो यथा—पुत्रे जाते द्वादशकपालेन पुरोडाशेन वैश्वानरं यजेदित्युपक्रम्य पुरतोऽष्टाकपालनवकपालदशकपालैकादशकपालादीनां पाविश्यौजोन्नाद्येन्द्रियादिदातृत्वेन प्रशंसोक्ता । तत्र द्वादशकपालेनैवेष्टसिद्धावष्टाकपालाद्यवयवस्तुत्यावयविनोऽपि प्रशंसोक्ता तद्वदत्रापि ज्ञेयम् । ६—अत्र तिथयस्तु नागः=पञ्चमी, दिक्=दशमी, भूतः=चतुर्दशी इति ज्ञेयाः । ७—'सर्वप्रकारवेधोऽयम्' इति वचनात् ।

**तत्र सर्वा तिथिर्यदहःकर्मकालव्यापिनी, सैव ग्राह्या।** 'कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः। तया कर्माणि कुर्वीत, ह्रासवृद्धी न कारणम् ॥' इति **विष्णुधर्मोक्तेः।** दिनद्वये तद्व्याप्तावव्याप्तावेकदेशव्याप्तौ वा युग्मवाक्यान्निर्णयः; तस्य पूर्वाबाधेनोपपत्तेः, कर्मकालस्य प्रधानाङ्गत्वाच्च। **युग्मवाक्यं तु निगमः।** 'युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥ प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम्। एतद्व्यस्तं[1] महादोषं, हन्ति पुण्यं पुरा कृतम् ॥' इति। अत्र रन्ध्रान्ताः शब्दा द्वितीयादिनवम्यन्ततिथिवाचकाः। रुद्रः=एकादशी। द्वितीया तृतीयायुता। सा च द्वितीयायुतेति सप्तयुग्मानी[2]त्यर्थः। इदं च शुक्लपक्षे; अमाप्रतिपद्युग्मस्य पूर्णिमायाश्च तत्रैव सत्त्वादिति **केचित्।** तत्त्वं त्वमाप्रतिपद्युग्मात् कृष्णपक्षलिङ्गात् पक्षद्वयपरमिदं तत्तद्विशेषवाक्यैः कृष्णे तिथिविशेषेऽपोह्यत इति। **दशमी तूक्ता पुराणसमुच्चये**–'संपूर्णे दशमी कार्या मिश्रिता, पूर्वयाथवा।' इति। संपूर्णे=शुक्लपक्षे। **त्रयोदशी तु सुमन्तुनोक्ता**–'त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने।' इति। **कृष्णपक्षे त्वापस्तम्बः**–'प्रतिपत्सद्वितीया स्यात्, द्वितीया प्रतिपद्युता। चतुर्थीसंयुता या च सा तृतीया फलप्रदा ॥ पञ्चमी च प्रकर्तव्या षष्ठ्या युक्ता तु नारद। कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥ पूर्वविद्धा प्रकर्तव्या, परविद्धा न कुत्रचित्। दशमी च प्रकर्तव्या सदुर्गा द्विजसत्तम ॥ षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी। एताः परयुताः पूज्याः, पराः पूर्वेण संयुताः ॥' इति। **यत्तु व्याघ्रः**–'खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्। खर्वदर्पौ परौ पूज्यौ, हिंसा स्यात् पूर्वकालिकी ॥' इति। खर्वः=साम्यं, दर्पः=वृद्धिः, तयोः परा। हिंसा=क्षयः, तत्र पूर्वेत्यर्थः। एतच्छ्राद्धादिविषयम्; 'द्वितीया[3]दिकयुग्मानां पूज्यता नियमादिषु। एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना ॥' इति **व्यासोक्तेः।** नियमादिषु=व्रतदानादिदैवकर्मसु। एकोद्दिष्टादितिथेर्वृद्ध्यादावित्यर्थः। कर्मकालव्याप्त्यभावे तु कर्मो[4]पक्रमकालगैव ग्राह्या। 'कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या, न युग्मादरः' इति **दीपिकोक्तेः। यानि तु**–'यां तिथिं समनुप्राप्य उदयं याति भास्करः। सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥' इत्यादीनि,–तानि त्रिमुहूर्तादिस्तुतिरिति **निर्णयशैली ॥**

**अथैकभक्तम्।** तत्कालः **पाद्मे**–'मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः।' इति। **मध्याह्नश्च** पञ्चधाविभक्तदिनतृतीयांशः। तेन यद्यपि द्वादशदण्डानन्तरं प्राप्यते, तथापि 'दिनार्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि ॥' इति **स्कान्दोक्तेः** षोडशसप्तदशादिदण्डा मुख्यः कालः। **दीपिकायां तु**–'मध्याह्नान्त्यदले त्रिभागदिवसे स्यादेकभक्तम्' इति। ततः सूर्यास्तपर्यन्तं गौणः। 'दिवैव

१—व्यस्तं=अन्यथा कृतम्। २—'द्वितीयादिषु युग्मानाम्' इति पाठः। ३—युग्मगता पूर्वा तिथिरुत्तरविद्धोदयव्यापिनी, उत्तरा च पूर्वविद्धाऽस्तमयव्यापिनी ग्राह्येत्याशयः। ४—'यो यस्य विहितः कालः कर्मणस्तदुपक्रमे। विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु ॥' इति बौधायनवचनाच्च। ५—अत्र—'संध्याभोजननिषेधस्य रागप्राप्तभोजनपरतयेहाप्रवृत्तेः' इति हेतुरुक्तष्टीकायाम्।

हि' इत्यस्य वैयर्थ्यापत्त्यैतत्परत्वात्। अत्र पूर्वेद्युरेव व्याप्तिः, परेद्युरेव, उभयेद्युर्व्याप्तिः, तदभावः, अंशव्याप्तिः, तत्रापि साम्यं वैषम्यं चेति **षट् पक्षाः**। 'तत्राद्ययोरसंदेह एव, तृतीये तु पूर्वेऽह्नि गौणमुख्यव्याप्तेः सत्त्वात् पूर्वा इति **माधवः**। 'युग्मवाक्यान्निर्णयः' इति **हेमाद्रिः**। चतुर्थपक्षे पूर्वैव; गौणकालव्याप्तेः सत्त्वात् वैषम्येणांशव्याप्तौ याधिका, सा ग्राह्या, साम्ये पूर्वा। अयं च **स्वतन्त्रैकभक्तनिर्णयः**। अन्याङ्गे उपवासप्रतिनिधौ[1] च तदनुसारेण निर्णयः॥

नक्त-प्रदोषयोर्विचारः।

**अथ नक्तम्**। तच्च दिनानशनपूर्वं रात्रिभोजनम्। तत्र प्रदोषव्यापिनी ग्राह्या। 'प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते[2] सदा।' इति **वत्सोक्तेः**। **प्रदोषस्तु**—'त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तं गते सति। नक्तं तत्र तु कर्तव्यमिति शास्त्रविनिश्चयः॥' इति **मदनरत्ने व्यासोक्तेः**। तत्रापि त्रिदण्डोत्तरं कार्यम्। 'सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः।' इति **स्कान्दोक्तेर्**दण्डत्रयस्य संध्यात्वात्। तत्र—'चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत्। आहारं, मैथुनं, निद्रां, स्वाध्यायं च चतुर्थकम्॥' इति **मार्कण्डेयेन** भोजननिषेधात्। 'मुहूर्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः। नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप॥' इति **माधवीये भविष्योक्तेश्च**। **गौडास्तु**—'प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते॥' इति **वत्सोक्तः** प्रदोषः। **सन्ध्या च** दिनरात्र्योः सन्धौ मुहूर्तः। 'अर्धास्तमयात्संध्या व्यक्तीभूता न तारका यावत्। तेजःपरिहानिवशाद्भानोरर्धोदयं यावत्॥' इति **वराहोक्तेरित्याहुः**,—तन्न; अस्य संध्यावन्दनानध्यायादिपरत्वात्। अत एव तत्र खण्डमण्डलस्य संध्यात्वमुक्तं **विज्ञानेश्वरेण**। यच्च **मदनरत्ने** 'नक्तस्य वैधत्वाद्रागप्राप्तभोजनगोचरो निषेधः' इत्युक्तम्,—तन्न; विधेर्निषेधाविरोधात्। अन्यथा कपिञ्जलानित्यत्र[3] त्रिभ्योऽधिकानां हिंसनं स्यात्। सायंकाले नक्तं तु दिनद्वये प्रदोषास्पर्शे ज्ञेयम्; 'अतथात्वे परत्र स्यादस्तादर्वाग्यतो हि सा।' इति **जाबालिवचनात्**। 'प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते। आत्मनो द्विगुणा छाया मन्दीभवति भास्करे॥ तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम्॥' इति **स्कान्दाच्च**। यत्यादीनामपि सायाह्ने नक्तम्। 'नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः। यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम्॥' इति तत्रैव **स्मृत्यन्तरात्**। इदमपुत्रविधुरोपलक्षणम्। पुत्रवतस्तु रात्रावेव; 'अनाश्रमोऽप्याश्रमी स्यादपत्नीकोऽपि पुत्रवान्।' इति **संग्रहोक्तेः**। **सौरनक्तं** तु दिवैव; 'त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः। तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम्॥' इति **सुमन्तूक्तेः**।

---

१—उपवासस्य प्रतिनिधिः पर्यायः। उपवासलक्षणं तूक्तं स्मृत्यन्तरे—'उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयो न शरीरविशोषणम्।' इति। २—'तिथिर्यथोपवासे स्यादेकभक्तेऽपि सा तथा।' इति सुमन्तुवचनमपि उपवासप्रतिनिध्येकपरम्' इति टीकायामुक्तम्। ३—अश्वमेधे 'वसन्तदेवतायै कपिञ्जलानालभेत' इत्युक्तं तत्र 'कपिञ्जलान्' इति बहुवचनेनेति भावः।

'मनोव्रतपतीमिश्चतस्र आज्याहुतीर्हुत्वा पुनः प्रतीयात् ।' तत्रैव **मरीचिः**–'ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रे कुरुतेऽथ वा । गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति ॥'

**मनुः**–'भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने । आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥' शर्मन्निति नकारात्पूर्व इत्यर्थः । अभिवादनप्रत्यभिवादनादौ विशेषः **स्मृत्यर्थसारे पारिजातादौ ज्ञेयः । यमः**–'ज्यायानपि कनीयांसं संध्यायामभिवादयेत् । विना शिष्यं च पुत्रं च दौहित्रं दुहितुः पतिम् ॥'

अथ **पुनरुपनयनम् । पारिजाते शातातपः**–'लशुनं गृञ्जनं[1] जग्ध्वा पलाण्डुं च तथा शुनः । उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् ॥ उपायनं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः ॥' इति । **हेमाद्रौ वृद्धमनुः**–'जीवन्यदि समागच्छेद्घृतकुम्भे निमज्ज्य च । उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥' तत्रैव **पाद्मे**–'प्रेतशय्याप्रतिग्राही पुनः संस्कारमर्हति ।' **चन्द्रिकायां बौधायनः**–'सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गान्ध्रान् गत्वा संस्कारमर्हति ॥' **हेमाद्रौ प्रायश्चित्तकाण्डे वृद्धगौतमः**–'खरमुष्ट्रं च महिषमनड्वाहमजं तथा । बस्तमारुह्य मुखजः क्रोशे चान्द्रं विनिर्दिशेत् ॥' **मार्कण्डेयः**–'खरमारुह्य विप्रस्तु योजनं यदि गच्छति । तप्तकृच्छ्रत्रयं प्रोक्तं शरीरस्य विशोधनम् ॥ पुनर्जन्म प्रकुर्वीत घृतगर्भविधानतः ॥ **मदनरत्ने मिताक्षरायां च** स्नानमात्रमुक्तम् । **मनुः**–'अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥' **मिताक्षरायां पराशरः**–'यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः । अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥ स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च । जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् ॥'

**बौधायनसूत्रे**–'अथोपनीतस्य व्रतानि भवन्ति,–नान्यस्योच्छिष्टं भुञ्जीतान्यत्र पितृज्येष्ठाभ्यां, न स्त्रिया सह भुञ्जीत, मधुमांसश्राद्धसूतकान्नानि, दशाहसंधिनीक्षीरं, छत्राकनिर्यासौ, विलापनं, गणान्नं, गणिकान्नमिति । एतेषु पुनःसंस्कारः ।' प्रतिषिद्धदेशगमनमित्येके । अथाप्युदाहरन्ति–'सुराष्ट्रसिन्धुसौवीरमवन्तीं दक्षिणापथम् । एतानि ब्राह्मणो गत्वा पुनःसंस्कारमर्हति ॥' अथ पुनःसंस्कारं व्याख्यास्यामो देवयजनप्रभृत्याग्निमुखात्कृत्वा पालाशीं समिधमाज्येनाङ्क्त्वाऽभ्याधाय वाचयति'–पुनस्त्वादित्या रुद्रा वसवः० कामाः स्वाहा' इति । अथ व्रात्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाभूत्०पुनरग्निश्चक्षुरदादिति द्वाभ्यामथ पक्वाज्जुहोति–'सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त० घृतेन स्वाहा' इति । अथाज्याहुतीरुपजुहोति–'येन देवाः पवित्रेण०' इति तिसृभिरनुच्छन्दसं स्विष्टकृत्प्रभृति सिद्धमाधेनुवरदानादथापरमा परिदानात्कृत्वा पालाशीं समिधमाधायाथ व्रात्यप्रायश्चित्ते जुहोत्यथ व्याहृतीर्जुहोति । अथापरो ब्राह्मणवचनादेव सावित्र्या शतकृत्वो घृतमभिमन्त्र्य प्राश्य[2] कृतप्रायश्चित्तो भवति ।

---

१—गृञ्जनं लशुनसदृशः कन्दविशेषः, 'गाजर' इति लोके, पलाण्डुर्वा, अथवा पत्रभेदः, यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति । २—'अश्नत्य' इति पाठः ।

गुरोर्वाप्युच्छिष्टं भुञ्जीत । अथाप्युदाहरन्ति—'वपनं दक्षिणादानं मेखलादण्डमजिनभैक्ष्यचर्याव्रतानि च निवर्तन्ते पुनःसंस्कारकर्मणि' इति ।

**आश्वलायनगृह्येऽपि**—'अथोपेतपूर्वस्य' इत्यादिना पुनःसंस्कार उक्तः । तथा पित्रादिव्यतिरेकेण ब्रह्मचारिणः प्रेतकर्मकरणे पुनरुपनयनमित्यपरार्कादयः । **त्रिस्थलीसेतौ**—'कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणात्पुनःसंस्कारमर्हति ॥' **गौडास्तु**—'करतोयाजलस्पर्शात्कर्मनाशाविलङ्घनात् ।' इति पठन्ति । तन्न; दानधर्मेषु करतोयास्नाने प्राशस्त्योक्तेः । 'करतोये सदानीरे सरिच्छ्रेष्ठेऽतिविश्रुते । आप्लावयसि पौराणां पापं हरकरोद्भवे ॥' इति **स्मृतिदर्पणचन्द्रिकालिखितस्नानमन्त्राच्च** । **पराशरः**—'अजिनं मेखला दण्डो भैक्ष्यचर्या व्रतानि च । निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥' **हरदत्तस्तु**—'य एकं वेदमधीत्यान्यं वेदमध्येतुमिच्छति तस्य पुनरुपनयनम्, तेन प्रतिवेदमुपनयनं कर्तव्यम्' इत्याह । अन्ये नैतन्मन्यन्ते; 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते' इत्यापस्तम्बोक्तेः ।

**तद्विधिः कारिकायाम्**—'वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते । उपनीतिरियं तेषामलंकरणवर्जिता ॥ यद्वैतदुपनीतस्य प्रायश्चित्तं यदा भवेत् । कृताकृतं च वपनं मेधाजननमेव च ॥ मेधाजननसद्भावे व्रतचर्या भवेदिह । अनुप्रवचनीयश्च तदभावे द्वयं न हि ॥ परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम् । पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे ॥' इति । यत्तु **हारीतः**—'द्विविधाः स्त्रियः—ब्रह्मवादिन्यः, सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्ष्यचर्या' इति, 'सद्योवधूनामुपनयनं कृत्वा विवाहः कार्यः' इति,—तद्युगान्तरविषयम्; 'पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥' इति **यमोक्तेः** ॥

**अथानध्यायाः । पारिजाते बृहस्पतिः**—'प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । श्वोऽनध्यायेऽद्यशर्वर्यां नाधीयीत कदाचन ॥' **नारदः**—'अयने विषुवे चैव शयने बोधने हरेः । अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥' **निर्णयामृते**—'चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु । अनध्यायस्तु कर्तव्यो या च सोपपदा तिथिः ॥' **गर्गः**—'शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥' **स्मृत्यर्थसारेऽपि**—'आषाढीकार्तिकीफाल्गुनीसमीपस्थद्वितीयासु च' इति । **मनुः**—'उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् । अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥' इति । उत्सर्गे तु—'मनूक्तपक्षिण्यहोरात्राभ्यां त्र्यहस्य विकल्पः' इति **विज्ञानेश्वरः** । 'अष्टका'-शब्देन सप्तम्यादित्रयं ज्ञेयम्; 'तिस्रोऽष्टकास्त्रिरात्रमन्त्यामेके' इति **गौतमोक्तेः** । 'ऋत्वन्तास्विति सौरऋत्वन्तासु, चान्द्रान्तस्य पर्वत्वेनैव निषेधसिद्धेः' इति **सर्वज्ञनारायणः** । एते नित्याः ।

---

१—'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥' इति स्मृत्युक्तेश्च । तथा चोपनयने सावित्र्या अनुवचने सर्वे वेदा अनूक्ता भवन्तीत्याशयः ।

**नैमित्तिकान**प्याह **याज्ञवल्क्यः**–'त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा॥ संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने। समाप्य वेदं द्युनिशमारण्यकमधीत्य च॥ पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके। ऋतुसंधिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च॥ पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः। कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये॥' ग्रहणे द्युनिशोक्तावपि ग्रस्तास्ते त्र्यहमित्युक्तं प्राक्।

**स्मृत्यर्थसारे** तु 'रात्रौ तु ग्रहे तिस्रो रात्रीः, दिवा च त्र्यहम्।' इत्युक्तम्। ऋतुः= सौरः। भुक्त्वेत्युत्सवविषयम्; 'ऊर्ध्वं भोजनादुत्सवे' इति **गौतमोक्तेः**। श्राद्धिकं महैकोद्दिष्टभिन्नम्। तत्र तु त्र्यहमिति **मनुः**, **स्मृत्यर्थसारे** चैवम्। यत्तु–'पश्वाद्यन्तराये त्र्यहमुपवासो विप्रवासश्च' इति **गौतमोक्तं**, तत् प्रथमाध्ययने।

**याज्ञवल्क्यः**–'श्वक्रोष्टृगर्दभोलूकसामबाणार्तनिःस्वने। अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके॥ देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे। भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते॥ पांसुप्रवर्षे दिग्दाहे संध्यानीहारभीतिषु। धावतः पूतिगन्धे च शिष्टे च गृहमागते॥ खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे। सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः॥' बाणः=वंशः। शततन्तुर्वीणेति **हरदत्तः**। अमेध्याः=सूतिकादयः। स्तनितं=गर्जः। वर्षातोऽन्यत्र गर्जवृष्टिविद्युतां यौगपद्ये आकालिकः, वर्षासु तात्कालिक इति **नारायणः**। संध्यागर्जे तु **हारीतः**–'सायंसंध्यास्तनिते रात्रिः, प्रातःसंध्यास्तनितेऽहोरात्रं, रात्रौ विद्युत्यपररात्र्यवधिः।', 'विद्युति नक्तं चापररात्रात्' इति **गौतमोक्तेः**। 'तृतीयदिनांशोत्त तु विद्युति सर्वरात्रम्' इत्याह **स** एव। त्रिभागादिप्रवृत्तौ सर्वमिति, अर्धरात्रे मध्ययामद्वयमिति **विज्ञानेश्वरः**। मध्यदण्डचतुष्टय इति **निर्णयामृते**। **मनुः**–'न विवादे न कलहे न सेनायां न सङ्गरे। न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके॥ रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते॥' **कौर्मे**–'श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च। कदाचिदपि नाध्येयं कोविदारकपित्थयोः॥' **मनुः**–'शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम्। नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च॥' प्रौढपादः=पादोपरि पाददाता, आसनारूढपादो वेति **हरदत्तः**। सोपपदास्वपि प्रागुक्तम्। **स्मृत्यर्थसारे**–'श्रवणद्वादशीमहाभरण्योः प्रेतद्वितीयायां रथसप्तम्यामाकाशे शवदर्शने चाहोरात्रम्। असपिण्डे गुरौ मृते त्रिरात्रम्। आचार्ये उपाध्याये च पक्षिणी, आचार्यभार्यापुत्रशिष्येष्वहोरात्रम्। अद्भुतोत्पातेन गोविप्रमृतौ त्रिरात्रम्। अयने विषुवे च पक्षिणी, अकालवृष्टौ च। आरण्यमार्जारसर्पनकुलपञ्चनखादेरन्तरागमने त्रिरात्रम्। आरण्यश्वशृगालादिवानररजकादौ द्वादशरात्रम्। खरवराहोष्ट्रचाण्डालसूतिकोदक्याशवादौ मासम्। गोगवयाजानास्तिकादौ त्रिमासम्। शशमेषश्वपाकादौ षण्मासम्। गजगण्डसारससिंहव्याघ्रमहापापिकृतघ्नादावब्दमनध्यायः। शोभनदिने चानध्यायः। विवाहप्रतिष्ठोद्यापनादिष्वासमाप्तेः सगोत्राणामन-

१—अवसक्थिका=वस्त्रादिभिर्जानुनोः पृष्ठेन सह बन्धनम्।

ध्यायः । 'उदयेऽस्तमये वापि मुहूर्तत्रयगामि यत् । तद्दिनं तदहोरात्रं चानध्यायविदो विदुः ॥ केचिदाहुः क्वचिद्देशे यावत्तद्दिननाडिकाः । तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे ॥'

**प्रदोषं** त्वाह **प्रजापतिः**–'षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका । प्रदोषे न त्वधीयीत तृतीया नवनाडिका ॥' **निर्णयामृते गर्गः**–'रात्रौ यामद्वयादर्वाक् सप्तमी वा त्रयोदशी । प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ॥ रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते । प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ॥' **कौर्मे**–'अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः । न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् ॥' **शौनकः**–'नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च । नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः ॥'

इत्यनध्यायाः ॥

अथ **महानाम्न्यादिव्रतम्** । **श्रीधरः**–'तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् । चौलवत् सर्वमाख्यातं सगोदानव्रतेषु च ॥' एषां **लोपे शौनकः**–'व्रतानि विधिना कृत्वा स्वशाखाध्ययनं चरेत् । अकृत्वाभ्यस्यते येन स पापी विधिघातकः ॥ प्रत्येकं कृच्छ्रमेकैकं चरित्वाज्याहुतीः शतम् । हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ॥' **स्मृत्यर्थसारे** तु–'त्रीन्षड् द्वादश वा कृच्छ्रान्कृत्वा पुनर्व्रतं चरेत्' इत्युक्तम् ॥

समावर्तनम् ।

अथ समावर्तनम् । **सुरेश्वरः**–'भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते । ताराचन्द्रविशुद्धौ च स्यात्समावर्तनक्रिया ॥' **बौधायनसूत्रे तु**–'रोहिण्यां तिष्ये उत्तरयोः फल्गुन्योर्हस्ते चित्रायामैन्द्रे विशाखायां वा स्नायात्' **इत्युक्तम्** । **वसिष्ठः**–'स्नानं मध्याह्नकाले तु होरायां कारयेच्छुभम् । पूर्वाह्णे तदभावे तु कुर्यात्स्नानं यथाविधि ॥' 'सर्वे ऋतवो विवाहस्य' इति **सूत्रात्** यदा दक्षिणायने विवाहस्तदा समावर्तनमपि तत्रैव । अन्यथोदगयने समावर्तने 'अनाश्रमी न तिष्ठेत' इति विरोधः स्यादित्युक्तं **सुदर्शनभाष्ये** । एतच्च ब्रह्मचारिव्रतलोपप्रायश्चित्तं कृत्वा कार्यम् । तदाह **बौधायनः**–'शौचसंध्यादर्भभिक्षाग्निकार्यराहित्यकौपीनोपवीतमेखलादण्डाजिनाधारणदिवास्वापच्छत्रपादुकास्रग्विधारणाङ्गोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याभिरतौ ब्रह्मचारी कृच्छ्रत्रयं चरेत्, महाव्याहृतिहोमं (पाहित्रयोदशहोमं च) कुर्यात् ।' समावर्तनोत्तरं पूर्वमृतानां त्रिरात्रमाशौचं कार्यम्; 'आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत् ॥' इति **मनूक्तेः** । आदिष्टी ब्रह्मचारीति **विज्ञानेश्वरः** । ब्रह्मचर्ये यदि कश्चिन्न मृतस्तदा त्रिरात्रमध्ये विवाहः कार्योऽन्यथा नेति सिध्यति । जनने तु सत्यपि न त्रिरात्रम्, तत्रातिक्रान्ताशौचाभावादुदकं दत्त्वेति वचनाच्चेति दिक् । तत्रापि विकल्पः; 'पितर्यपि मृते नैषां दोषो भवति कर्हिचित् । आशौचं कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम् ॥' इति **छन्दोगपरिशिष्टात्** ॥

**स्नातकव्रतान्याह व्यासः**—'यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् । छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ॥ रौक्मे च कुण्डले वेदः कृत्तकेशनखः शुचिः ॥' वेदः=दर्भबटुः । **मनुः**—'उपानहौ च वासश्च धृतमन्यैर्न धारयेत् । उपवीतमलंकारं स्रजं करकमेव च ॥' अन्यान्यपि बह्वृचगृह्यस्मृत्यादिभ्यो ज्ञेयानि ॥

अथ **छुरिकाबन्धः** । **ज्योतिर्निबन्धे नारदः**—'छुरिकाबन्धनं वक्ष्ये नृपाणां प्राक् करग्रहात् । विवाहोक्तेषु मासेषु शुक्लपक्षेऽप्यनस्तगे ॥ जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते । मौञ्जीबन्धर्क्षतिथिषु कुजवर्जितवासरे ॥' **संग्रहे**—'शूद्राणां राजपुत्राणां मौञ्ज्यभावेऽस्त्रबन्धनम् । मौञ्जीबन्धोक्ततिथ्यादौ कार्यं भौमदिनं विना ॥'

विवाहः ।

अथ विवाहः । **याज्ञवल्क्यः**—'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥' लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युक्ताम् । बाह्यानि **काशीखण्डादौ** प्रसिद्धानि । आन्तराण्या**श्वलायनोक्ता**नि 'अष्टौ पिण्डान्कृत्वा'[1] इत्यादीनि ॥

**मनुः**—'असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥' दत्त्रिममातुर्गृहीता असपिण्डा सगोत्रा । तत्कुलनिवृत्तये चकारान्मातुरसगोत्रा

सापिण्ड्यनिर्णयः ।

दत्तस्य पितुर्जनककुले पितुरसगोत्रापि सपिण्डत्वान्निषिद्धेत्यन्यश्चकारः । असपिण्डां=सापिण्ड्यरहिताम् । तच्चैकशरीरावयवान्वयेन भवति । एकस्य हि पितुर्मातुर्वा शरीरस्यावयवाः पुत्रपौत्रादिषु साक्षात्परम्परया वा शुक्रशोणितादिरूपेणानुस्यूताः । यद्यपि पत्न्याः पत्या सह भ्रातृपत्नीनां च परस्परं नैतत्संभवति, तथापि आधारत्वेनैकशरीरावयवान्वयोऽस्त्येव । 'अस्थिभिरस्थीनि' इति **मन्त्रलिङ्गात्** । एकस्य हि पितृशरीरस्यावयवाः पुत्रद्वारा तास्वाहिता इति **मदनरत्नपारिजातविज्ञानेश्वरादयः** । **वाचस्पतिशुद्धिविवेकशूलपाण्यादिगौडमैथिलादयो**ऽप्येवम् । **श्रुतावपि**—'एतत्षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः' इति, 'प्रजामनु प्रजायसे' इति च ।

**चन्द्रिकाऽपरार्कमेधातिथिमाधवादयस्तु** एकपिण्डदानक्रियान्वयित्वं सापिण्ड्यम्; 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥' इति **मात्स्योक्तेः** । न च पितृव्यादिष्वेतन्नास्तीति वाच्यम्; तत्कर्तृकश्राद्धे देवतैक्येन तत्सत्त्वात् । देवदत्तकर्तृकश्राद्धे हि ये देवताभूतास्तेषां मध्ये यः कश्चिदन्य-

---

१—तानि च सकलानि—'अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसंपन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात्पतिघ्नी' इत्याश्वलायनसूत्रे प्रोक्तानि । एतत्प्रयोगश्च नारायणवृत्तितोऽवसेयः ।

कर्तृकश्राद्धेऽनुप्रविशति तेषां सापिण्ड्यम्; तद्भार्याणामपि भर्तृकर्तृकश्राद्धे सहाधिकारित्वेन तदन्वयात्; 'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।' इति **स्मृतेश्च,** श्रुतीनां च वैराग्यार्थत्वात्तस्याः सापिण्ड्यनिमित्तत्वे मानाभावात् । न च मातुलादिष्वेतन्नास्तीति वाच्यम्; मातामहरूपदैवतैक्यात् । **ननु** गुरुशिष्यादेरपि श्राद्धदेवतात्वात्सपिण्डत्वं स्यात् । किं बहुना, 'सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थतः ।' इति **मार्कण्डेयपुराणा**द्राज्ञोऽपि श्राद्धकर्तृत्वात्सापिण्ड्यप्रसङ्गः । सत्यम्; 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।' इति **याज्ञवल्क्यवचनेन** मातापितृसंबन्ध एव तत्सत्त्वात् । ऊर्ध्वं 'सापिण्ड्यं निवर्तत' इति शेषः । ननु पञ्चमत्वाद्यत्र नियम्यते, न मातृत इत्यादि; वाक्यभेदात् । **मैवम्;** मातृकुले पञ्चमत्वस्य पितृकुले सप्तमत्वस्य च बोधने तुल्यत्वात् । पौरुषेयत्वाददोष इति चेत् तुल्यमन्यत्रापि, अन्यकर्तृके राज्ञस्तत्पितॄणां वा देवतात्वाभावाच्च । किंच अवयवान्वयपक्षे यथा योगरूढ्या परिहारस्तथेहापि तेन मातृकुले पितृकुले चैकपिण्डदानक्रियान्वयित्वं सापिण्ड्यमित्याहुः । तेनैकस्य पित्रादयः षट् पुत्रादयश्च षट् सपिण्डा भवन्ति ।

अत्र केचिदुभयतः सापिण्ड्यनिवृत्तावेवोद्वाहो नान्यथेत्याहुः । **शुद्धचिन्तामणिवाचस्पतिहरदत्तादयस्तु** सगोत्रत्ववत् सापिण्ड्यस्य सप्रतियोगिकत्वेन संयोगवदुभयनिरूप्यत्वात् एकतो निवृत्तावन्यतो निवृत्तेरावश्यकत्वान्मूलपुरुषमारभ्याष्टमो वरो मूलपुरुषमारभ्य द्वितीयातृतीयादिकां कन्यामुद्वहेदित्याहुः । **शिष्टास्तु**–न वधूवरयोः स्वतः सापिण्ड्यं, किंतु कूटस्थसंततित्वात्तत्सापिण्ड्येनैव । अतोऽष्टमवरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात्तत्संततिस्थत्वाद्वरस्तां प्रति सपिण्ड एवेत्यविवाहः । सापिण्ड्यासापिण्ड्ययोः प्रतियोगिभेदेनाविरोधादित्याहुः । इदमेव च युक्तम्; आशौचेऽप्येवं सापिण्ड्यं ज्ञेयम् । यत्र तु मध्ये विच्छिन्नमपि सापिण्ड्यं मण्डूकप्लुतिवत्पुनरनुवर्तते । यथा कूटस्थात्पञ्चम्योः कन्ययोः पुत्रौ तत्र निवृत्तिः, तदपत्ययोस्त्वनुवृत्तिस्तत्रापि न सापिण्ड्यासापिण्ड्ययोर्दोषः; संबन्धिभेदात् । तेन तत्र न विवाहः ।

अत्र कूटस्थमारभ्य गणना कार्या । तदुक्तम्–'वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः । पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥' इति । कूटस्थः=मूलपुरुषः । **विश्वरूपनिबन्धे**–'एवमुक्तप्रकारेण पितृबन्धुषु सप्तमात् । ऊर्ध्वमेव विवाह्यत्वं पञ्चमान्मातृबन्धुतः ॥ संतानो भिद्यते यस्मात्पूर्वजादुभयत्र च । तमादाय गणेद्धीमान्वरं यावच्च कन्यकाम् ॥' **स्मृतितत्त्वे नारदः**–'आ सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा ॥' अत्र 'बन्धुभ्यः' इति पञ्चमीनिर्देशात्पितुः पितृष्वसृपुत्रात्सप्तमीं, मातुः मातृष्वसृपुत्राच्च[2] पञ्चमीमपि त्यजेत् । एवमन्यबन्धुषु ज्ञेयम् । तत्रापि त्रिगोत्रात्ययेऽर्वागपि विवाहं कुर्यात्; वक्ष्यमाणवचनात् । त्रिगोत्रगणना च मातामह-

१—मातरमादाय कुले समुदाये इत्याशयः । २—'पितृष्वसृपुत्राच्च' इति पाठः ।

गोत्रापेक्षया, नतु स्वापेक्षया । अन्यथा पितुः पितामहदुहितुर्दौहित्रीपुत्री परिणेया स्यात् । वध्वाः मातामहगोत्रापेक्षया तु त्रिगोत्रान्तर्गतेन विवाहप्रसङ्ग इति **संबन्धतत्त्वादयो गौडग्रन्थाः** । **संबन्धविवेके शूलपाणिरप्याह** । पञ्चमात्सप्तमाच्चार्वागपि त्रिगोत्रान्तरिता विवाह्या; 'असंबद्धा भवेन्मातुः पिण्डेनैवोदकेन वा । सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या ॥' इति **बृहन्मनूक्तेः**, 'सन्निकर्षेऽपि कर्तव्यं त्रिगोत्रात्परतो यदि ।' इति **देवलोक्तेश्चेति** ।–एतच्च **दाक्षिणात्या न मन्यन्ते** । यत्तु **वसिष्ठः**– 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ।' इति, यच्च **विष्णुपुराणम्**–'पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् । गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप ॥' इति, तत् पञ्चमीं सप्तमीमतीत्येति व्याख्येयम्; 'पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया । क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥' **इत्यपरार्के मरीचिवचनात्** । **हारलतायां शङ्खलिखितौ**–'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी । पिण्डश्चोदकदानं च आशौचं च तदानुगम् ॥' गोत्रं=संतानम्, आशौचं तानभिव्याप्य गच्छतीत्यर्थः ।

**शुद्धिविवेके शुद्धिचिन्तामणौ च ब्राह्मे**–'सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी । सपिण्डता ततः पश्चात् समानोदकधर्मता ॥ ततः कालवशात्तत्र विस्मृतौ नामगोत्रतः । समानोदकसंज्ञा तु तावन्मात्रापि नश्यति ॥' सप्तोर्ध्वं त्रयः सोदकाः, ततो गोत्रजाः । तत्रैव **ब्राह्मे**–'अविभक्तधनास्त्वेते सपिण्डाः परिकीर्तिताः ॥' तेनाविभक्तधनाभावे विभक्तः सपिण्डो धनहारी, नान्यथेत्यर्थः । तेन विवाहे आशौचे धनग्रहणे च त्रिधा सापिण्ड्य सिद्धम् । यत्तु–'पञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतस्त्रीन्मातृतः, पञ्च पितृतो वा' इति **पैठीनसिस्मृतौ** 'त्रीनित्यनुकल्पः' इति **माधवोक्तेः**, 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा । दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणा महाकुलात् ॥ उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् । पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः ॥ सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च । एवमुद्वाहयेत्कन्यां, न दोषः शाकटायनः ॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद्वेदाचैतत्प्रदृश्यते ॥' इति **चतुर्विंशतिमतात्**, 'चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा । पराशरमते षष्ठीं, पञ्चमो न तु पञ्चमीम् ॥' इति **पराशरोक्तेश्चानुकल्पत्वेनापदि** पञ्चम्यादिपरिणयनं कार्यमिति प्रतीयते । अत्र हि 'तदभावे' इति स्पष्टमेवानुकल्पत्वमुक्तम्, तन्न यथाश्रुतं ज्ञेयम्; पूर्वोक्त**मरीचि**वचोविरोधात्, वस्तुनि विकल्पासंभवात्, 'पञ्चमात्सप्तमाद्धीमान् यः कन्यामुद्वहेद्द्विजः । गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥' इति **विष्णूक्तेः**, **पराशरस्य** मूलाभावाच्च । तस्मान्**मदनपारिजाता**द्युक्तदिशा दत्तकसापत्नसंबन्धाद्यनुप्रवेशे ब्राह्मणादीनां क्षत्रियादिसपिण्डविषये वा पूर्वोक्तानि नेयानि, न त्वनुकल्प इति भ्रमितव्यम् ।

---

१—अनेन गोत्रवृत्तित्रित्वानाश्रयमातामहगोत्रका वधूर्विवाहे शक्येत्युक्तमिति भावः । २—द्व्यामुष्यायणदत्तकस्य मातृकुले सपत्नमातामहकुले च त्रिपुरुषं सापिण्ड्यमित्याशयः ।

यत्तु **स्मृतिचन्द्रिकामाधवादय** आहुः–'तृतीये संगच्छावहै, चतुर्थे संगच्छावहै' इति **शतपथश्रुतेः**, 'तृप्तां[1] जुहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव' इति, 'गर्भे तु नौ जनिता दम्पतीकः' इति च **मन्त्रवर्णात्**, 'मातृष्वसृसुतां केचित्पितृष्वसृसुतां तथा। विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम्॥' इति **शातातपोक्तेश्च**[2] मातुलकन्योद्वाहः कार्यः। यद्यपि पितृष्वसृकन्योद्वाहोऽपि प्राप्तस्तथापि 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु।' इति निषेधाद्वचनान्तरेण तदुद्वाहस्याविधानाच्च न कार्यः। अयं तु दाक्षिणात्यशिष्टाचारात्कार्य इति। न च पूर्वोक्तश्रुतीनामर्थवादमात्रता; मानान्तरेणासिद्धौ **'उपरि हि देवेभ्यो धारयति'** इतिवदनुवादानुपपत्त्या विधिकल्पनात्। यत्तु **शातातपः**–'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्॥' यच्च **मनुः**–'पैतृष्वसेयीभगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत्॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान्॥' यच्च **व्यासः**–'मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः।' इति, तद्गान्धर्वादिविवाहोढमातृविषयम्; तत्र पितृगोत्रानिवृत्तेः। अत एव **मार्कण्डेयपुराणम्**–'गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित्।' इति। ब्राह्मादिविवाहे तु परिणेत्रैवेति। **भट्टसोमेश्वरोऽपि तृतीयेऽध्याये वाक्यपादे** मातुलकन्योद्वाहमुदाहृत्य स्मृतिविरोधेनाचारप्राप्तस्यास्य वार्तिके बाधोक्तावपि पूर्वोक्तश्रौतलिङ्गबलीयस्त्वादस्य कर्तव्यतामाह। तदेतद्दत्तकस्य पालकदत्रिममातृसोदरकन्याविषयत्वेनासवर्णमातुलकन्याविषयत्वेन युगान्तरपरत्वेन चोपपन्नमपि अविचारितरमणीयं यथा, तथास्तु। तथापि कलौ तावन्निषिद्धमेव; 'गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा।' **इत्यादिपुराणात्**। **माधवीये बौधायनोऽप्यस्य** निन्दामाह–'पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरत ऊर्णाविक्रयोऽनुपेतेन स्त्रिया च सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनम्' इति। 'अथोत्तरतः सीधुपानादिकमुक्त्वा इतर इतरस्मिन्कुर्वन्दुष्यति इतर इतरस्मिन्' इति, **भट्टसोमेश्वरेणापि** स्मृतिविरुद्धानां मातुलकन्योद्वाहादीनामस्माद्वचनादप्रामाण्यमित्युक्तम्। **बृहस्पतिरपि**–'उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः। मत्स्यादाश्च नराः पूर्वे, व्यभिचाररताः स्त्रियः॥ उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः॥' इत्यनाचारत्वमाह। अत एव **हेमाद्रौ मात्स्ये** कर्णाटकादीनां तत्कारिणां श्राद्धे निषेधः। **बोपदेवेनापि** लिखितं **ब्राह्मम्**–'यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः। श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषम्॥' इति। तस्मान्मातृतः पञ्च, पितृतः सप्त त्यक्त्वोद्वहेदिति सिद्धम्।

---

१—अस्यायमर्थः—हे इन्द्र! त्वं ईळितैः प्रशस्तैः पथिभिः मार्गैर्नोऽस्माकं यज्ञमायाहि, आगत्य च तृप्तामाज्यप्लुतां वपां भागधेयं जुषस्व सेवस्व, तत्र दृष्टान्तद्वयम्—मातुलस्य जुहुः अपत्यं योषा स्त्री भागिनेयस्य भाग इव, पैतृष्वसेयी च मातुलपुत्रस्य भाग इव चेति। २—**संस्कारकौस्तुभे** तु—'कलावपि येषां कुले देशे अनुकल्पत्वेन सापिण्ड्यसंकोचः परंपरया समागतः, तेषां तादृशसंकोचेन विवाहे न दोषः। अस्ति च भार्यात्वोत्पत्तिः। अन्येषां तैः सह व्यवहारे नैव दोषः। हेमाद्र्यादौ श्राद्धनिषेधोऽपि स्वकुलदेशपरंपरयाऽनागतसापिण्ड्यसंकोचेन कृतविवाहविषय एवेति बोध्यम्।' इत्युक्तम्।

**संबन्धविवेके सुमन्तुः**—'ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति, आसप्तमाद्रिक्थविच्छित्तिर्भवति, आतृतीयात्पिण्डविच्छित्तिः, अन्यथा पिण्डशौचक्रियाविच्छेदाद्ब्रह्महतुल्यो भवति।' अस्यार्थमाह **शूलपाणिः**—'जीवत्पित्रादित्रिकस्य वृद्धप्रपितामहादयस्त्रयः श्राद्धदेवतात्वात्पिण्डभाजो भवन्ति, तदूर्ध्वं त्रयो नवपुरुषपर्यन्ता लेपभाजः, श्राद्धकर्ता च दशम इति दशमादूर्ध्वं सापिण्ड्यनिवृत्तिः। 'दशमात्' इत्युपलक्षणम्। तेन पितृपितामहजीवने नवपुरुषपर्यन्तं, पितृजीवने चाष्टपुरुषपर्यन्तं सापिण्ड्यमिति ज्ञेयम्।' अपुत्रधनग्रहणे संनिहिताभावे सप्तपुरुषपर्यन्तमधिकारः। धनग्राहिणमारभ्य तृतीयः पौत्रः, तदूर्ध्वं श्राद्धविच्छेदः। अन्यथा धनहारित्वेऽपुत्रश्राद्धाद्यकरणे ब्रह्महेत्यर्थः। आतृतीयादित्यनूढकन्याविषयम्; 'अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते' इति **वसिष्ठोक्तेः**। एतच्चाशौचविषयं सापिण्ड्यं, न तु विवाहादौ। तत्र पूर्वोक्तवचनैः पञ्चमत्वसप्तमत्वनियमादिति **मेधातिथिप्रमुखा दाक्षिणात्याः**। वाग्दानोत्तरमेतदिति **शुद्धिविवेकः**। मातृकुलविषयं कानीनकन्यकाविषयं चैतत्। अन्यथा—'अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्। प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः प्रजापतिः॥' इति **कौर्मेण** विरोधः स्यादिति **रत्नाकरस्मृतितत्त्वादिगौडग्रन्थाः**।—युक्तं चैतत्; अन्यथा कन्योत्पत्तौ पुरुषत्रयपर्यन्तमेव सूतकं स्यान्नोर्ध्वम्।

सापत्नमातामहकुले त्वाह **मिताक्षरायां शङ्खः**—'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु॥' पृथक्क्षेत्राः=भिन्नजातीयस्त्रीषु जाताः। पृथग्जनाः=सजातीयभिन्नमातृषु जाताः। अत्र त्रिपुरुषं सापिण्ड्यमिति **विज्ञानेश्वरो** व्याचख्यौ। **पृथ्वीचन्द्रोदये सापिण्ड्यदीपिकायां** चैवम्। **मदनपारिजाते** तु पृथक्क्षेत्रजाः=भिन्नमातृजाः, पृथग्जनाः=भिन्नजातीयाः। एतद्विजातीयसापत्नमातृकुलविषयम्। सवर्णसापत्नमातृकुले चतुःपुरुषं सापिण्ड्यम्; 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा।' इति **वसिष्ठोक्तेः**। सप्तमीमिति ब्राह्मणादीनां क्षत्रियादिदारोत्पन्नपितृकुलविषयं चेत्युक्तं तत्स्वकपोलकल्पितत्वात् ग्रन्थान्तरविरोधाच्च निर्मूलम्; 'पितृपत्न्यः सर्वा मातरः' इत्युक्त्वा, **सुमन्तुना** 'तदपत्यानि भागिनेयानि' इति पृथङ्निषेधाच्च। अन्यथा सपिण्डत्वेन निषेधात्सापत्नमातुलत्वादिनिर्देशो व्यर्थः। अत एव तेन **स्मृतिकौमुद्यां** सवर्णसापत्नमातामहकुलपरत्वेन तथैव **शङ्खवचनं** व्याख्यातम्। तेन वासिष्ठं 'पञ्चमीं सप्तमीमतीत्य' इति व्याख्येयम्। तस्मात्प्राच्येव व्याख्या युक्ता। **प्रयोगरत्ने भट्टैः स्मृतितत्त्वादिगौडग्रन्थेषु** च सपत्नमातामहकुले यावदुक्तं वाचनिकमेव सापिण्ड्यमुक्तम्। यथाह **सुमन्तुः**—'मातृपितृसंबद्धा आ सप्तमादविवाह्या भवन्ति। आ पञ्चमादन्येषां, पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि। अन्यथा संकरकारिणः स्युस्तथाऽध्यापयितेरतदेव' इति।

आ पञ्चमादिति मातृकुले त्रिगोत्रान्तरितविषयं वेति प्राच्याः । मात्स्ये–'समानप्रवरा चैव शिष्यसंततिरेव च । ब्रह्मदातुर्गुरोश्चैव संततिः प्रतिषिध्यते ॥' तद्भगिन्यो मातृष्वसार इति तु आकरे न पठितम् । क्वचिद्वचनादविवाहः । यथा गृह्यपरिशिष्टे–'अविरुद्ध-संबन्धामुपगच्छेत' इत्युक्त्वा विरुद्धसंबन्धः स्वयमेवोक्तः । यथा–'भार्या स्वसुर्दुहिता पितृव्यपत्नी स्वसा च' इति । बौधायनः–'मातुः सपत्न्या भगिनीं तत्सुतां च विवर्जयेत् । पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत् ॥' अतो मातृष्वसुः सापत्नपुत्रकन्याप्य-विवाह्या; 'सापत्नमातृकुलजाम्' इति मदनपारिजातोक्तेरिति केचित् ।

केचित्तु–'ज्येष्ठो भ्राता पितुः समः' इति मनूक्तेस्तत्पत्न्याः मातृत्वात्तत्पितुर्माता-महत्वाज्ज्येष्ठभ्रातृपत्नीभगिनी न विवाह्या । तथा–'उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।' इति मनूक्तेर्गुरुणा त्रिपुरुषं सापिण्ड्यं, सखापि निर्वाप्यः; अतस्तेषां कन्या नोद्वाह्याः । 'गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः । गुरोश्च कन्यां शिष्यो वा तत्संततस्यापि नेष्यते ॥ पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते । वाक्संबन्धकृतानां तु स्नेहसंबन्धभागिनाम् । विवाहो-ऽत्र न कर्तव्यो लोकगर्हा प्रसज्यते ॥' इति वचनाच्चेत्याहुः । तत्र मूलं चिन्त्यम् ।

दत्तकविषये तूच्यते । तत्र गौतमः—'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृ-बन्धुभ्यः पञ्चमात्' इति बन्धुग्रहणात्तत्र दत्तकमात्रपरमिदम्, किंतु संताने-ऽपि । एतत्क्षेत्रजादिसर्वद्व्यामुष्यायणपरमिति हरदत्तः । अत्र स्मृति-चन्द्रिका–'नियोगात् य उत्पादयति तस्माद्बीजिनोऽप्यूर्ध्वं सप्तमादित्यर्थः' इति, दत्तकस्य जनकविषयमेतदिति सापिण्ड्यमीमांसायाम् । तेन दत्तकस्य जनककुले साप्तपौरुषं, जननीकुले पाञ्चपौरुषं सापिण्ड्यम्, 'दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । सप्तमी पञ्चमी चैव गोत्रित्वं पालकस्य च ॥' इति बृहन्मनूक्तेः, 'बीजिनश्च' इति गौतमोक्तेश्च । पालकपितृकुले तु पञ्चपुरुषम्, पालकमातृकुले त्रिपुरुषम् । तथा चापरार्के पैठीनसिः–'त्रीन्मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेत्' इति । एतत्स एव व्याचख्यौ–'दत्तकादीन्पुत्रान् पितृपक्षतो निवृत्तपिण्डगोत्रार्षेयान्प्रत्येतदुच्यते पञ्च पितृत इति, नान्यान्प्रति' इति । यत्तु वृद्धगौतमः–'स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥', यच्च वसिष्ठः–'अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः । स्वगोत्रेण स्वशाखोक्तविधिना स्यात्स्वशाखभाक् ॥' इति । यच्च नारदः–'धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् । अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥' तत् पालककुले साप्त-पौरुषं सापिण्ड्यं नेत्येवंपरं, न तु सर्वथा सापिण्ड्यनिषेधपरमिति सापिण्ड्यमीमांसा-याम् । मदनपारिजातादपि दत्तकानुप्रवेशेऽल्पं सापिण्ड्यं प्रतिभाति । तथा हि तेन 'त्रीनतीत्य'इत्युदाहृत्य यस्य माता दत्तपुत्री प्रतिग्रहीत्रा पुत्रीकृता तस्याः प्रतिग्रहीतृकुले त्रीनतीत्येति, पञ्च पितृत इति यस्य दत्तपुत्रः पिता तस्य दत्तस्य यज्जनककुलं तद्विषयमित्युक्तम् ।

दत्तकसापिण्ड्यविचारः ।

वस्तुतस्तु पूर्ववचसां महानिबन्धेषु क्वाप्यनुपलम्भादपरार्कादिलिखनाभावात् पूर्वोक्त-
व्यवस्थायाश्च प्रातिभज्ञानतुल्यत्वाद्वैरेतल्लिखितं तेषामेव शोभते ।

मम तु पालककुले एकपिण्डदानक्रियान्वयित्वरूपं सप्तपौरुषमेव सापिण्ड्यम्; 'बीजि-
नश्च' इति गौतमोक्तेर्जनककुलेऽपि तावदेव । 'त्रीन् मातृतः' इत्यादि तु सवर्णसापत्नमातृ-
कुलपरम्, 'यद्येकजाता बहवः' इति शाङ्ग्र्यैकवाक्यत्वादिति युक्तं प्रतिभाति । अत एवास्य
द्व्यामुष्यायणत्वं हेमाद्रिप्रवरमञ्जरीवृत्तिकृन्नारायणादिभिरुक्तम् । भट्टसोमेश्व-
रेणापि–'पृथायाः कुन्तिभोजस्य पालककन्यात्वेऽपि ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च'
इति गौतमोक्तेर्दत्त्रिमायाः पृथाया जनकस्य शूरसेनस्य कुलेऽपि सप्तपौरुषम्,' पालक-
कुलेऽपि तावदेव सापिण्ड्यमुक्तम् 'अपि वा कारणाग्रहणे' इत्यत्र । सापिण्ड्यदीपिकायां
तु दत्तक्रीतादीनां जनकगोत्रेणोपनयने कृते जनककुले सप्तपौरुषं सापिण्ड्यम्, पालकमाता-
पितृकुले त्रिपुरुषम्, पिण्डनिर्वापान्निर्वाप्यलक्षणं त्रिपुरुषं सापिण्ड्यम्, पालकगोत्रेणोपन-
यने तत्कुले सप्तपौरुषमित्युक्तम् । तन्न; 'चूडोपायनसंस्कारा निजगोत्रेण वै कृताः । दत्ता-
द्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥' इति कालिकापुराणादुपनयनोत्तरं दत्तकनिषे-
धात् । त्रिपुरुषमित्यत्रापि मूलं मृग्यमित्यलं बहुना ।

मातापितृद्वारकसापिण्ड्यवतीनां कन्यानामियं संख्या रामवाजपेयिनोक्ता–'उद्वोढुः
पितरौ पितुश्च पितरौ तज्जन्मकृद्दम्पतिद्वन्द्वं तस्य चतुष्कमष्ट च ततोऽप्यस्य क्रमात्षो-
डश । वंशारम्भकदम्पतीप्रमितिरित्यासप्तकक्षं रदा एकैकान्वयकन्यकाः पितृकुले त्वा-
सप्तकक्षं ब्रुवे ॥ यद्यप्येकस्य बहवः सुताः स्युस्तदपीह तु । संबन्धसाम्यादेकैव गणितेत्यव-
धार्यताम् ॥ एकस्मान्मिथुनात्सुतोऽथ दुहिता द्वन्द्वद्वयं तद्द्वयात्तस्माद्द्वन्द्वचतुष्कमष्ट च ततो-
ऽतः षोडशाऽतो रदाः । यावत्सप्तमकक्षमभिऋतवः कन्या इहैकान्वये ता दन्तैर्गुणिता
रसैकखदशो वंशे सपिण्डाः पितुः ॥ मातुर्जन्मददम्पती च मिथुनद्वन्द्वं तयोः सागरा-
स्तस्याः पञ्चमकक्षमश्वमितिरित्येकान्वयः पुंसुते । द्वन्द्वाद्द्वन्द्वयुगं ततोऽब्धय इतोऽष्टौ पञ्चकक्षं
शरक्षोण्यः सप्तगुणाः शराभ्रविधवो मातुः सपिण्डाः कुले ॥ कुलद्वयस्य कन्यकायुता मिथः
सपिण्डकाः । हिमांशुदृग्धराद्दशो विवाहकर्मवर्जिताः ॥' इति । एतच्च सर्ववर्णसाधा-
रणम्, सर्वत्र सापिण्ड्यसद्भावादिति विज्ञानेश्वरोक्तेः । 'पञ्चमात्सप्तमादूर्ध्वं मातृतः
पितृतः क्रमात् । सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥' इति हरनाथधृतदेवल-
वचनाच्च । संबन्धतत्त्वे सुमन्तुः–'पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृ-
सगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत्परित्यज्यैनां मातृवद्बिभृयात्' इति दिक् ।
ऋषेरिदमार्षं प्रवरः, गोत्रं प्रसिद्धम्, समाने आर्षगोत्रे यस्य तस्माज्जाता या न भवति
ताम् ॥

अथ संक्षेपेण गोत्रप्रवरनिर्णयः । तौ च भिन्नौ निषेधे निमित्तम्; 'सगोत्राय

नि० सिं० २७

दुहितर न प्रयच्छेत्' इति **आपस्तम्बोक्तेः**, 'असमानप्रवरैर्विवाहः' इति **गौतमोक्तेश्च**। तत्र **गोत्रलक्षणमाह प्रवरमञ्जर्यां बौधायनः**—'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः॥ सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रम्।' इति। यद्यपि केवलभार्गवेष्वार्ष्टिषेणादिषु केवलाङ्गिरसेषु हरितादिषु च नैतत्, भृग्वङ्गिरसोरुक्तेष्वनन्तर्गतेः। तथाप्यत्रेष्टापत्तिरेवेति **केचित्**। अत एव **स्मृत्यर्थसारे** प्रवरैक्यादेवात्राविवाह उक्तः। यद्यपि वसिष्ठादीनां न गोत्रत्वं युक्तम्, तेषां सप्तर्षित्वेन तदपत्यत्वाभावात्, तथापि तत्पूर्वभाविवासिष्ठाद्यपत्यत्वेन गोत्रत्वं युक्तम्। अत एव पूर्वेषां परेषां चैतद्गोत्रम्। अत्र विशेषोऽस्मत्कृत**प्रवरदर्पणे** ज्ञेयः॥

**प्रवरास्तु** प्रवरणानि[1] प्रवराः। **कल्पकारा** हि 'वासिष्ठेति होता', 'वसिष्ठवदित्यध्वर्युः' इत्यादिना येषां प्रवरणमामनन्ति ते प्रवराः। तच्च वरणं यद्यपि गोत्रभूतस्यापि क्वचिद्दृश्यते तथापि पूर्ववदृषिभेदो द्रष्टव्यः; अन्यथा तेषां त्र्यार्षेये 'एकार्षे' इत्यादिनिर्देशानुपपत्तेः। **अन्ये तु** तद्गोत्राणां त्र्यार्षेय इति भेदमाहुरिति दिक्। **तत्त्वं** तु—गोत्रभूतस्य पितृ-पितामह-प्रपितामहा एव प्रवराः, 'पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति **शतपथश्रुतेः**, 'परं परं प्रथमम्' **इत्याश्वलायनोक्तेश्च**। अत्र विशेषमाह **बौधायनः**—'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते। तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात्' इति। **स्मृत्यर्थसारे**—'म्रियमाणतया[2] वापि सत्तया वानुवर्तनम्। एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते॥' भृग्वङ्गिरोगणेषु तु **माधवीये स्मृत्यन्तरे**—'पञ्चार्षे त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः। भृग्वङ्गिरोगणेष्वेव शेषेष्वेकोऽपि वारयेत्॥' शेषगोत्रेषु एकोऽपि समानः प्रवरो विवाहं वारयेदित्यर्थः। **बौधायनोऽपि**—भृग्वङ्गिरसावधिकृत्य—'द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां, त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणाम्' इति। भृग्वङ्गिरोगणेष्वपि जमदग्निगौतमभरद्वाजेष्वेकप्रवरसाम्ये सर्वेषामप्यसाम्ये वा सगोत्रत्वादेवाविवाह इति दिक्॥

**अथ गोत्राणि प्रवराश्चोच्यन्ते**। तत्र **बौधायनः**—'गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च। ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्॥' तत्र **सप्त भृगवः**। वत्सा बिदा आर्ष्टिषेणा यास्का मित्रयुवो वैन्याः शुनका इति। वत्सानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येति, भार्गवौर्वजामदग्न्येति वा, भार्गवच्यावनाप्नवानेति वा। बिदानां पञ्च—भार्गवच्यावनाप्नवानौर्वबैदेति, भार्गवौर्वजामदग्न्येति वा। एतौ द्वौ जामदग्न्यसंज्ञौ। आर्ष्टिषेणानां भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति, भार्गवार्ष्टिषेणानूपेति वा। एषां त्रयाणां परस्परमविवाहः[3]। वात्स्यानां भार्गवच्यावनाप्नवानेति। वत्सपुरोधसयोः पञ्च। भार्गवच्यावनाप्नवानवात्सपौरोधसेति। बैजवनिमतिथयोः पञ्च। भार्गवच्यावनाप्नवानबैजमतिथेति। **एते त्रयः क्वचित्**। एषामपि पूर्वैरविवाहः। अत्र तत्तद्गणस्था ऋषयोऽन्यश्च विशेषो **मत्कृते प्रवरदर्पणे** ज्ञेयः। यस्कानां भार्गववैतहव्यसावेतसेति। मित्रयुवां भार्गववाध्र्यश्व-

१—प्रवरणं=अग्निप्रार्थना। २—'म्रियमाणा तया वापि' इति पाठः। ३—तथा चोक्तम्—'जामदग्न्यौ वत्स-बिदा-वार्ष्टिषेणाः परस्परम्। नाग्नियुः प्रवरैक्येन सगोत्रत्वेन चादिमौ॥' इति।

दैवोदासेति, भार्गवच्यावनदैवोदासेति वा, वाध्र्यश्वेत्येको वा । वैन्यानां भार्गववैन्यपार्थेति । एत एव श्यैताः । शुनकानां शुनकेति वा गार्त्समदेति वा भार्गवगार्त्समदेति द्वौ वा । भार्गवशौनहोत्रगार्त्समदेति त्रयो वा । वेदविश्वज्योतिषां भार्गववेदवैश्वज्योतिषेति । शाठरमाठराणां भार्गवशाठरमाठरेति । **एतौ द्वौ क्वचित्** । यस्कादीनां स्वगणं त्यक्त्वा सर्वैर्विवाहः । तदुक्तं **स्मृत्यर्थसारे**—'यस्का मित्रयुवो वैन्याः शुनकाः प्रवरैक्यतः । स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥' इति ॥

## भृगवः सप्त ७

ते च वत्सा बिदा आर्ष्टिषेणा यस्का मित्रयुवो वैन्याः शुनका इति ।

**वत्साः**—मार्कण्डेयेत्यादीनि द्विशताधिकानि गोत्राणि सन्ति ते च वत्सास्तेषां—'भार्गवच्यावनाप्नवानौर्वजामदग्न्येति' पञ्च प्रवराः, अथवा 'भार्गवौर्वजामदग्न्येति' त्रयः, अथवा 'भार्गवच्यावनाप्नवानेति' त्रयः ।

**बिदाः**—शैलावटेत्यादीनि विंशत्यधिकानि गोत्राणि सन्ति, ते च बिदास्तेषां—'भार्गवच्यावनाप्नवानौर्वबैदेति' पञ्च प्रवराः, अथवा 'भार्गवौर्वजामदग्न्येति' त्रयः ।

**आर्ष्टिषेणाः**—नैर्ऋतिग्राम्यायणेत्यादि विंशत्यधिका आर्ष्टिषेणास्तेषां—'भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति' पञ्च प्रवराः, अथवा 'भार्गवार्ष्टिषेणानूपेति' त्रयः । वत्सबिदार्ष्टिषेणानां प्रवरत्रयसाम्यात्परस्परं विवाहो न भवति ।

**वात्स्याः**—'भार्गवच्यावनाप्नवानेति' त्रयः प्रवराः ।

**वत्सपुरोधसौ**—'भार्गवच्यावनाप्नवानवात्सपौरोधसेति' पञ्च ।

**बैजवनिमतिथी**—'भार्गवच्यावनाप्नवानबैज(वन)मतिथेति' पञ्च । वात्स्य-वत्सपुरोधस-बैजमतिथेति क्वचिद्गणत्रयमधिकम् । एषां परस्परं उपरिनिर्दिष्टगणत्रयेण च विवाहो न भवति ।

**यस्काः**—मौनमूकेत्यादित्रिपञ्चाशघ्योऽधिका यस्कास्तेषां—'भार्गववैतहव्यसावेतसेति' त्रयः प्रवराः ।

**मित्रयुवः**—रैक्ष्णायन-सापिण्डिनेति त्रिंशघ्योऽधिका मित्रयुवस्तेषां—'भार्गववाध्र्यश्वदैवोदासेति' त्रयः, अथवा 'भार्गवच्यावनदैवोदासेति' त्रयः, अथवा 'वाध्र्यश्वेति' एकः ।

**वैन्याः**—पार्थबाष्कलश्येता वैन्यास्तेषां—'भार्गववैन्यपार्थेति' त्रयः प्रवराः ।

**शुनकाः**—गार्त्समदयज्ञपतीत्यादिसप्तदशाधिकाः शुनकास्तेषां—'शौनकेति' एकः, अथवा 'गार्त्समदेति' एकः, अथवा 'भार्गवगार्त्समदेति' द्वौ, अथवा 'भार्गवशौनहोत्रगार्त्समदेति' त्रयः ।

### क्वचिद्गणद्वयमधिकम् ।

**वेदविश्वज्योतिषः**—एषां—'भार्गववेदवैश्वज्योतिषेति' त्रयः ।

**शाठरमाठराः**—एषां—'भार्गवशाठरमाठरेति' त्रयः ।

अथाङ्गिरसः। ते गौतमाः, भरद्वाजाः, केवलाङ्गिरसश्चेति त्रिधा। अत्र गौतमा दश–आयास्याः, शरद्वताः, कौमण्डाः, दीर्घतमसः, औशनसाः, कारेणुपालेयाः, राहूगणाः, सोमराजकाः, वामदेवाः, बृहदुक्थाश्चेति। तत्रायास्यानामाङ्गिरसायास्यगौतमेति। शरद्वतानामाङ्गिरसगौतमशारद्वतेति। कौमण्डानामाङ्गिरसौतथ्यकाक्षीवतगौतमकौमाण्डेति वा, आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति वा, आङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति वा, आङ्गिरसौशिजकाक्षीवतेति त्रयो वा। दीर्घतमसामाङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति, आङ्गिरसौतथ्यदैर्घतमसेति त्रयो वा। औशनसानामाङ्गिरसगौतमौशनसेति त्रयः। कारेणुपालेयानामाङ्गिरसगौतमकारेणुपालेति त्रयः। राहूगणानामाङ्गिरसराहूगणगौतमेति। सोमराजकानामाङ्गिरससोमराजकगौतमेति। वामदेवानामाङ्गिरसवामदेव्यगौतमेति। बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति, आङ्गिरसवामदेवबार्हदुक्थेति वा। उतथ्यानामाङ्गिरसौतथ्यगौतमेति। औशिजानाम्–'आङ्गिरसौशिजकाक्षीवत' इत्यापस्तम्बः। 'आङ्गिरसायास्यौशिजगौतमकाक्षीवत' इति कात्यायनः। एतौ द्वौ क्वचित्। राघुवानामाङ्गिरसराघुवगौतमेति केचित्। तत्र मूलं चिन्त्यम्। एषां सर्वेषां गौतमानामविवाहः॥

## आङ्गिरसगणः–

ते च-गौतम-भरद्वाज-केवलाङ्गिरसेति त्रिविधाः।

### गौतमा दश १०

आयास्याः—श्रोणिवेध-मूढरथेत्याद्या अष्टादशभ्योऽधिका आयास्यास्तेषां–'आङ्गिरसायास्यगौतमेति' त्रयः।

शारद्वताः—आभिजितरौहिण्वेत्यादि सप्तत्यधिकाः शारद्वतास्तेषां–'आङ्गिरसगौतमशारद्वतेति' त्रयः।

कौमण्डाः—मामन्थरेषण-मांसुराक्षेत्यादिदशभ्योऽधिकाः कौमण्डास्तेषां–'आङ्गिरसौतथ्यकाक्षीवतगौतमकौमाण्डेति' पञ्च, अथवा 'आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति' पञ्च, अथवा 'आङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति' पञ्च, अथवा 'आङ्गिरसौशिजकाक्षीवतेति' त्रयः।

दीर्घतमसः—एषां–'आङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति' पञ्च, अथवा 'आङ्गिरसौतथ्यदैर्घतमसेति' त्रयः।

औशनसः—दिश्य इत्यादयो नवाधिका औशनसास्तेषां–'आङ्गिरसगौतमौशनसेति' त्रयः।

कारेणुपालेयाः—वास्तव्यश्वेतीय इत्यादयः सप्ताधिकाः कारेणुपालयस्तेषां–'आङ्गिरसगौतमकारेणुपालेति' त्रयः।

राहूगणाः—एषा–'आङ्गिरसराहूगणगौतमेति' त्रयः।

सोमराजकाः—एषां–'आङ्गिरससोमराजकगौतमेति' त्रयः।

वामदेवाः—एषां–'आङ्गिरसवामदेव्यगौतमेति' त्रयः।

बृहदुक्थाः—एषां–'आङ्गिरसबार्हदुक्थगौतमेति' त्रयः । अथवा 'आङ्गिरसवामदेवबार्हदुक्थेति' त्रयः ।

### क्वचिद्गणद्वयमधिकम् ।

उतथ्याः—एषां–'आङ्गिरसौतथ्यगौतमेति' त्रयः ।

औशिजाः—एषां–'आङ्गिरसौशिजकाक्षीवतेति' त्रय इत्यापस्तम्बः, 'आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति' पञ्चेति कात्यायनः ।

राघु(यु)वाः—एषां–'आङ्गिरसराघु(यु)वगौतमेति' त्रय इति केचित् । अत्र मूलं चिन्त्यम् । एषां सर्वेषां गौतमानां परस्परं विवाहो न भवति ।

अथ भरद्वाजाः । ते चत्वारः । भरद्वाजाः, गर्गाः, ऋक्षाः, कपय इति । भरद्वाजानामाङ्गिरसबार्हस्पत्यभारद्वाजेति त्रयः । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येति पञ्च आङ्गिरससैन्यगार्ग्येति त्रयो वा, अन्त्ययोर्व्यत्ययो वा, भारद्वाजगार्ग्यसैन्येति वा । गर्गभेदानामाङ्गिरसतैत्तिरिकापिभुवेति । ऋक्षाणां कपिलानां चाङ्गिरसबार्हस्पत्यभरद्वाजवान्दनमातवचसेति पञ्च, आङ्गिरसवान्दनमातवचसेति त्रयो वा । कपीनामाङ्गिरसामहीयवौरुक्षयसेति । आत्मभुवामाङ्गिरसभारद्वाजबार्हस्पत्यमन्त्रवरात्मभुवेति पञ्च । अयं क्वचित् । भरद्वाजानां सर्वेषामविवाहः ॥

### भरद्वाजगणाश्चत्वारः ४

भरद्वाजाः—क्षाम्यायणदेवाश्च इत्यादयः षष्ट्युत्तरशताधिका भरद्वाजास्तेषां–'आङ्गिरसबार्हस्पत्यभारद्वाजेति' त्रयः ।

गर्गाः—सांभरायणसखीनय इत्यादयः पञ्चाशदधिका गर्गास्तेषां–'आङ्गिरसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येति' पञ्च, अथवा 'आङ्गिरससैन्यगार्ग्येति' त्रयः, अथवा 'आङ्गिरसगार्ग्यसैन्येति त्रयः, अथवा 'भारद्वाजगार्ग्यसैन्येति' त्रयः । गर्गभेदानां–'आङ्गिरसतैत्तिरिकापिभुवेति' त्रयः ।

ऋक्षाः—रौक्षायणकपिलेत्यादयो नवाधिका ऋक्षास्तेषां–'आङ्गिरसबार्हस्पत्यभरद्वाजवान्दनमातवचसेति' पञ्च, अथवा 'आङ्गिरसवान्दनमातवचसेति' त्रयः ।

कपयः—स्वस्तितरादिदण्डिस्त्यादयः पञ्चविंशत्यधिकाः कपयस्तेषां–'आङ्गिरसामहीयवौरुक्षयसेति' त्रयः ।

आत्मभुवः—एषां–'आङ्गिरसभारद्वाजबार्हस्पत्यमन्त्रवरात्मभुवेति' पञ्च । अयं गणः क्वचित् । एषां सर्वभरद्वाजानां परस्परं विवाहो न भवति ।

अथ केवलाङ्गिरसः । ते च षट्–हारिताः, कुत्साः, कण्वाः, रथीतराः, मुद्गलाः, विष्णुवृद्धाश्चेति । हारितानां आङ्गिरसाम्बरीषयौवनाश्वेति, आद्यो मान्धाता वा । कुत्सानामाङ्गिरसमान्धातृकौत्सेति, कण्वानामाङ्गिरसाजमीढकाण्वेति, आङ्गिरसघोरकाण्वेति वा ।

---

१—'शैन्येति' तालव्यान्तोऽपि पाठः क्वचित् । २—'तित्तिरि-कपिभूमि-खण्डितेति' अपरो गर्गभेदः ।

रथीतराणामाङ्गिरसवैरूपराथीतरेति, आङ्गिरसवैरूपपार्षदश्वेति वा, अष्टादंष्ट्रपार्षदश्ववैरूपेति वा, अन्त्ययोर्व्यत्ययो वा । मुद्गलानामाङ्गिरसभार्म्याश्वमौद्गल्येति, आद्यस्ताक्ष्यो वा, आङ्गिरसताक्ष्यमौद्गल्येति वा । विष्णुवृद्धानामाङ्गिरसपौरुकुत्स्यत्रासदस्यवेति । एषां स्वगणं विहाय सर्वैर्विवाहो भवति । हारितकुत्सयोस्तु न भवति ॥

### केवलाङ्गिरसां गणाः ६

हारिताः—सौभग-मैयगवेत्यादयो द्वात्रिंशदधिका हारितास्तेषां–'आङ्गिरसाम्बरीषयौवनाश्वेति' त्रयः, अथवा तिसृणां प्रवराणां मध्ये आदिमस्थाने 'मान्धाता' अस्ति ।

कुत्साः—एषां–'आङ्गिरसमान्धातृकौत्सेति' त्रयः ।

कण्वाः—औपमर्कटबाष्कलेत्यादय एकविंशत्यधिकाः कण्वास्तेषां 'आङ्गिरसाजमीढकाण्वेति' त्रयः, अथवा 'आङ्गिरसघोरकाण्वेति' त्रयः ।

रथीतराः—हस्तिदनैतिरक्षीत्यादयश्चतुर्दशभ्योऽधिका रथीतरास्तेषां–'आङ्गिरसवैरूपराथीतरेति' त्रयः, अथवा 'अङ्गिरसवैरूपपार्षदश्वेति' त्रयः, अथवा 'अष्टादंष्ट्रपार्षदश्ववैरूपेति' त्रयः, अथवाऽन्त्यद्वयोर्विपर्यासोऽस्ति ।

मुद्गलाः—सात्यमुग्रीत्यादयोऽष्टादशभ्योऽधिका मुद्गलास्तेषां–'आङ्गिरसभार्म्याश्वमौद्गल्येति' त्रयः, अथवा प्रथमस्ताक्ष्यः, अथवा 'आङ्गिरसताक्ष्यमौद्गल्येति' त्रयः ।

विष्णुवृद्धाः—शठ-भरणेत्यादयः पञ्चविंशत्यधिका विष्णुवृद्धास्तेषां–'आङ्गिरसपौरुकुत्स्यत्रासदस्यवेति' त्रयः ।

अथात्रयः । ते चत्वारः । अत्रयः[1], वाद्भुतकाः, गविष्ठिराः, मुद्गला इति । आद्यानामात्रेयार्चनानसश्यावाश्वेति । वाद्भुतकानां आत्रेयार्चनानसवाद्भुतकेति । धनंजयानामात्रेयार्चनानसधानञ्जयेति क्वचित् । गविष्ठिराणामात्रेयार्चनानसगाविष्ठिरेति, आत्रेयगाविष्ठिरपौर्वातिथेति वा । मुद्गलानामात्रेयार्चनानसपौर्वातिथेति । वामरथ्यसुमङ्गलबैजवापानामात्रेयार्चनानसातिथेति, आत्रेयार्चनानसगाविष्ठिरेति वा । सुमङ्गलानामत्रिसुमङ्गलश्यावाश्वेति केचित् । अत्रेः पुत्रिकापुत्राणामात्रेयवामरथ्यपौत्रिकेति । अत्रीणां सर्वेषामविवाहः ॥

### अत्रयश्चत्वारः ४

अत्रयः—भूरीत्यादयश्चतुर्नवतिभ्योऽधिका अत्रयस्तेषां–'आत्रेयार्चनानसश्यावाश्वेति' त्रयः ।

वाद्भुतकाः—एषां–'आत्रेयार्चनानसवाद्भुतकेति' त्रयः ।

धनंजयाः—एषां–'आत्रेयार्चनानसधानञ्जयेति' त्रयः । अयं गणः क्वचित् ।

गविष्ठिराः—दक्षि-भलन्दनेत्यादयश्चतुर्विंशतिभ्योऽधिका गविष्ठिरास्तेषां–'आत्रेयार्चनानसगाविष्ठिरेति' त्रयः । अथवा 'आत्रेयगाविष्ठिरपौर्वातिथेति' त्रयः ।

१—यथोक्तम्—'चत्वारोऽत्रय आद्यत्रिवाद्भुतकगविष्ठिराः । मुद्गलाश्चेति गोत्रैक्यात्प्रवरैक्याच्च नाऽन्वियुः ॥' इति ।

मुद्गलाः—शालिसंधि-मर्णवेत्याद्यो दशभ्योऽधिका मुद्गलास्तेषां-'आत्रेयार्चनानसपौर्वातिथेति' त्रयः ।
वामरथ्य-सुमङ्गल-बैजवापाः—एषां-'आत्रेयार्चनानसातिथेति' त्रयः, अथवा 'आत्रेयार्चनान-सगाविष्ठिरेति' त्रयः ।
सुमङ्गलाः—एषां-'अत्रिसुमङ्गलश्यावाश्वेति' त्रयः, इमे चत्वारो गणाः केचिदाहुः ।
वालेयाः—कौद्रेय-शौभ्रेय-वामरथ्येत्यादयोऽत्रेः पुत्रिकापुत्रास्तेषां-'आत्रेयवामरथ्यपौत्रिकेति त्रयः । सर्वेषामत्रीणां सगोत्रत्वात्सप्रवरत्वाच्च परस्परं विवाहो न भवति । अत्रेः पुत्रिकापुत्राणां च वासिष्ठ-विश्वामित्राभ्यां सह विवाहो न भवति ।

अथ विश्वामित्राः । ते दश-कुशिकाः, लोहिताः, रौक्षकाः, कामकायनाः, अजाः, कताः, धनंजयाः, अघमर्षणाः, पूरणाः, इन्द्रकौशिका इति । कुशिकानां वैश्वामित्रदेवरातौदलेति । लोहितानां वैश्वामित्राष्टकलौहितेति, अन्त्ययोर्व्यत्ययो वा, वैश्वामित्रमाधुच्छन्दसाष्टकेति वा, वैश्वामित्राष्टकेति द्वौ वा । रौक्षकाणां वैश्वामित्रगाथिनरैवणेति, वैश्वामित्ररौक्षकरैवणेति वा । कामकायनानां वैश्वामित्रदेवश्रवसदैवतरसेति । अजानां वैश्वामित्रमाधुच्छन्दसाजेति, वैश्वामित्राश्मरथवाधूलेति वा । कतानां वैश्वामित्रकात्यात्कीलेति । धनंजयानां विश्वामित्रमाधुच्छन्दसधानंजयेति, वैश्वामित्रमाधुच्छन्दसाघमर्षणेति वा । अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । पूरणानां वैश्वामित्रपौरणेति द्वौ, वैश्वामित्रदेवरातपौरणेति वा । इन्द्रकौशिकानां वैश्वामित्रेन्द्रकौशिकेति द्वौ । एते **बौधायनोक्ताः** । रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति । रेणूनां वैश्वामित्रगाथिनरैणवेति । वेणूनां वैश्वामित्रगाथिनवैणवेति । जह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति । आश्मरथ्यानां वैश्वामित्राश्मरथ्यवाधूलेति । उदवेणूनां वैश्वामित्रगाथिनवैणवेति । एते **आश्वलायनमात्स्योक्ताः** । अन्यैस्त्वन्येऽपि षड्गणा उक्ताः । तेऽन्यत्र मत्कृतौ ज्ञेयाः । एषां विश्वामित्राणामविवाहः ॥

**विश्वामित्रगणाः १०**

कुशिकाः—पाणजङ्घ-वारक्येत्यादयः सप्ततिभ्योऽधिकाः कुशिकास्तेषां-'वैश्वामित्रदेवरातौदलेति' त्रयः प्रवराः ।
लोहिताः—कृडकय-चाक्रवर्णायनेत्यादयः पञ्चभ्योऽधिका लोहितास्तेषा-वैश्वामित्राष्टककलौहितेति' त्रयः, अथवाऽन्तिमद्वयोर्विपर्यासः, अथवा 'वैश्वामित्रमाधुच्छन्दसाष्टकेति' त्रयः, अथवा 'वैश्वा-मित्राष्टकेति' द्वौ ।
रौक्षकाः—एषां 'वैश्वामित्रगाथिनरैवणेति' त्रयः, अथवा 'वैश्वामित्ररौक्षकरैवणेति' त्रयः ।
कामकायनाः—देवश्रवस्-देवतरसेत्यादिपञ्चभ्योऽधिकाः कामकायनास्तेषां-'वैश्वामित्रदेवश्रव-सदैवतरसेति' त्रयः ।
अजाः—एषां-'वैश्वामित्रमाधुच्छन्दसाजेति' त्रयः, अथवा 'वैश्वामित्राश्मरथवाधूलेति' त्रयः ।
कताः—औदुम्बरिशैशिरीत्यादयो विंशतिभ्योऽधिकाः कतास्तेषां-'वैश्वामित्रकात्यात्कीलेति' त्रयः ।

धनंजयाः—पार्थिव-बभ्रुलेखादयः सप्तभ्योऽधिका धनंजयास्तेषां-'विश्वामित्रमाधुच्छन्दसधानं-जयेति' त्रयः, अथवा 'वैश्वामित्रमाधुच्छन्दसाघमर्षणेति' त्रयः।

अघमर्षणाः—एषां-'वैश्वामित्राघमर्षणकौशिकेति' त्रयः।

पूरणाः—एषां-'वैश्वामित्रपौरणेति' द्वौ, अथवा 'वैश्वामित्रदेवरातपौरणेति' त्रयः।

इन्द्रकौशिकाः—एषां-'वैश्वामित्रेन्द्रकौशिकेति' द्वौ।

इमे बौधायनोक्ता ज्ञेयाः।

रौहिणाः—एषां-'वैश्वामित्रमाधुच्छन्दसरौहिणेति' त्रयः।

रेणवः— एषां-'वैश्वामित्रगाथिनरैणवेति' त्रयः।

वेणवः—एषां-'वैश्वामित्रगाथिनवैणवेति' त्रयः।

जह्नवः—एषां-'वैश्वामित्रशालङ्कायनकौशिकेति' त्रयः।

आश्मरथ्याः—एषां-'वैश्वामित्राश्मरथ्यवाधूलेति' त्रयः।

उदवेणवः—एषां-'वैश्वामित्रगाथिनवैणवेति' त्रयः।

**अथ कश्यपाः।** ते पञ्च–निध्रुवाः, कश्यपाः, रेभाः, शण्डिलाः, लौगाक्षयश्च। निध्रुवाणां काश्यपावत्सारनैध्रुवेति। कश्यपानां काश्यपावत्सारासितेति। रेभाणां काश्यपावत्साररैभ्येति। शण्डिलानां काश्यपावत्सारशाण्डिल्येति। अन्त्यस्थाने देवलो वा, असितो वा, शाण्डिलासितदेवलेति वा, काश्यपासितदेवलेति वा, अन्त्ययोर्व्यत्ययो वा, देवलासितेति द्वौ वा। लौगाक्षीन् वक्ष्यामः। एषां कश्यपानामविवाहः॥

**कश्यपाः ५**

निध्रुवाः—इमे चत्वारिंशदधिकशताधिकास्तेषां-'काश्यपावत्सारनैध्रुवेति' त्रयः।

कश्यपाः—एषां-'काश्यपावत्सारासितेति' त्रयः।

रेभाः—एषां-'काश्यपावत्साररैभ्येति' त्रयः।

शण्डिलाः—कोहल-औदमेघेत्यादि षष्ट्यधिकाः शण्डिलास्तेषां-काश्यपावत्सारशाण्डिल्येति त्रयः, अथवाऽन्तिमो 'देवलोऽसितो' वा, अथवा 'शाण्डिलासितदेवलेति' त्रयः, अथवा 'काश्यपासितदेवलेति', अथवान्तिमयोर्द्वयोर्विपर्यासः, अथवा 'देवलासितेति' द्वौ।

लौगाक्षयः—इमान् द्विगोत्रिष्वग्रे कथयिष्यामः।

**अथ वसिष्ठाः।** ते पञ्च–वसिष्ठाः, कुण्डिनाः, उपमन्यवः, पराशराः, जातूकर्ण्याश्चेति। वासिष्ठानां वासिष्ठेन्द्रप्रमदाभरद्वस्विति, वासिष्ठेत्येको वा। कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति। उपमन्यूनां वासिष्ठेन्द्रप्रमदाभरद्वस्विति, वासिष्ठाभरद्वस्विन्द्रप्रमदेति वा, आद्ययोर्व्यत्ययो वा। पराशराणां वासिष्ठशात्त्यपाराशर्येति। जातूकर्ण्यानां वसिष्ठात्रिजातूकर्ण्येति। वसिष्ठानां सर्वेषामविवाहः, अन्यत्रात्रिमिश्र॥

**वसिष्ठाः ५**

**वसिष्ठाः**—वैतालकवि-रकीत्यादयः षष्ट्यधिका वसिष्ठास्तेषां–'वासिष्ठेन्द्रप्रमदाभरद्वस्विति' त्रयः, अथवा 'वासिष्ठेति' एकः प्रवरः।

**कुण्डिनाः**—लोहितायन-गुग्गुलीत्यादयः पञ्चविंशतिभ्योऽधिकाः कुण्डिनास्तेषां–'वासिष्ठमैत्रावरुणकौण्डिन्येति' त्रयः।

**उपमन्यवः**—औदलय इत्यादयः सप्ततिभ्योऽधिका उपमन्यवस्तेषां–'वासिष्ठेन्द्रप्रमदाभरद्वस्विति' त्रयः, अथवा 'वासिष्ठाभरद्वस्विन्द्रप्रमदेति' त्रयः, अथवादिमद्वयोर्विपर्यासः।

**पराशराः**—काण्ड(ण्डू)शय-वाजीत्यादयः सप्तचत्वारिंशद्भ्योऽधिकाः पाराशरास्तेषां–'वासिष्ठशाक्त्यपाराशर्येति' त्रयः।

**जातूकर्ण्यः**—एषां–'वासिष्ठात्रिजातूकर्ण्येति त्रयः।

**अथागस्त्याः।** ते चत्वारः। इध्मवाहाः, साम्भवाहाः, सोमवाहाः, यज्ञवाहाश्चेति। आद्यानामागस्त्यदार्ढ्यच्युतैध्मवाहेति, आगस्त्येत्येको वा। सोमवाहानामागस्त्यदार्ढ्यच्युतसोमवाहेति। साम्भवाहानां साम्भवाहोऽन्त्यः। यज्ञवाहानां यज्ञवाहोऽन्त्यः। आद्यौ पूर्वोक्तावेव। सारवाहानां तदन्तास्त्रयः। दर्भवाहानां तदन्तास्त्रयः। अगस्तीनामागस्त्यमाहेन्द्रमायोभुवेति। पूर्णमासानामागस्त्यपौर्णमासपारणेति। हिमोदकानामागस्त्यहैमवर्चिहैमोदकेति। पाणिकानामागस्त्यपैनायकपाणिकेति। एते षट् क्वचित्। अगस्तीनां सर्वेषामविवाहः॥

**अगस्त्याः ४**

**इध्मवाहाः**—विशालाद्य-स्फालायनेत्यादयः पञ्चाशद्भ्योऽधिका इध्मवाहास्तेषां 'आगस्त्यदार्ढ्यच्युतैध्मवाहेति' त्रयः, अथवा 'आगस्त्येति' एकः।

**साम्भवाहाः**—एषां–'आगस्त्यदार्ढ्यच्युतसाम्भवाहेति' त्रयः।

**सोमवाहाः**—एषां–'आगस्त्यदार्ढ्यच्युतसोमवाहेति' त्रयः।

**यज्ञवाहाः**—एषां–'आगस्त्यदार्ढ्यच्युतयज्ञवाहेति' त्रयः।

**सारवाहाः**—एषां–'आगस्त्यदार्ढ्यच्युतसारवाहेति' त्रयः।

**दर्भवाहाः**—एषां–'आगस्त्यदार्ढ्यच्युतदर्भवाहेति' त्रयः।

**अगस्तयः**—एषां–'आगस्त्यमाहेन्द्रमायोभुवेति' त्रयः।

**पूर्णमासाः**—एषां–'आगस्त्यपौर्णमासपारणेति' त्रयः।

**हिमोदकाः**—एषां–'आगस्त्यहैमवर्चिहैमोदकेति' त्रयः।

**पाणिकाः**—एषां–'आगस्त्यपैनायकपाणिकेति' त्रयः।

सारवाहेभ्योऽग्रे षड्गणाः क्वचित्।

**अथ द्विगोत्राः।** शौङ्गशैशिरीणामाङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति पञ्च, कात्याक्षीलयोः स्थाने शौङ्गशैशिरिर्वा। आङ्गिरसकात्याक्षीलेति त्रयो वा। एषां भरद्वाजैर्विश्वा-

१—'वर्चि' इत्यपि पाठः क्वचित्। २—तेषां गोत्रैक्यात्प्रवरैक्याच्चाविवाहः।

मित्रैश्चाविवाहः । एवं कपिलानां कतानां च । संकृतिपूतिमाषादीनां आङ्गिरसगौरिवीतिसांकृत्येति, शात्त्यगौरिवीतिसांकृत्येति वा, ( अन्त्ययोर्व्यत्ययो वा ) । एषां स्वगणस्थैर्वसिष्ठैः शौङ्गशैशिरैर्लौगाक्षिभिश्चाविवाहः । कश्यपैरपीति **प्रयोगपारिजाते** । लौगाक्षीणां काश्यपावत्सारवासिष्ठेति, काश्यपावत्सारासितेति वा । एतेऽहर्वसिष्ठा नक्तंकश्यपाः । एषां वसिष्ठैः कश्यपैः संकृतिभिश्चाविवाहः । देवरातस्य जामदग्न्यैर्विश्वामित्रैश्चाविवाह इति **प्रयोगपारिजाते** । तदयुक्तम्; **बह्वृचश्रुतौ**–'यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम् । आङ्गिरसो जन्मनास्याजीगर्तिः श्रुतः कविः ॥' इत्यङ्गिरोगणस्थत्वेन भार्गवजामदग्न्यत्वस्मृतेर्हरिवंशादिस्मृतेश्च बाधात् । तेन द्वौ देवरातौ एक आङ्गिरसः श्रुत्युक्तः, अन्यो भार्गवः । तयोः कल्पभेदेऽप्याङ्गिरसेन देवरातेन जामदग्न्यैर्भवत्येव विवाहः । भार्गवेण तु नेति **तत्त्वम्** । धनंजयानां विश्वामित्रैरत्रिभिश्चाविवाहः । जातूकर्ण्यानां वसिष्ठैरत्रिभिश्चाविवाहः । एवं दत्तक्रीतकृत्रिमस्वयंदत्तपुत्रिकापुत्रादीनाम् । उत्पादकपालकयोः पित्रोर्गोत्रप्रवरा वर्ज्या इति **प्रवरमञ्जरीनारायणवृत्तिप्रयोगपारिजातादयः** । अत्र सर्वत्रोपपत्तयो मूलं च **मत्कृते प्रवरदर्पणे** ज्ञेयमिति दिक् ॥

क्षत्रियवैश्ययोस्तु पुरोहितगोत्रप्रवरावेवेति सर्वसिद्धान्तः । यद्यपि **बह्वृचपरिशिष्टे** कपिभरद्वाजयोर्विवाह उक्तस्तथापि–'भरद्वाजाश्च कपयो गर्गा रौक्षायणा इति । चत्वारोऽपि भरद्वाजगोत्रैक्यान्नान्वयुर्मिथः ॥ कपिगर्गभरद्वाजा मिथो रौक्षायणा द्विजाः । नोद्वहेयुः सगोत्रत्वात्प्रवरैक्याच्च कुत्रचित् ॥' इति **स्मृत्यर्थसाराद्युक्ते**रविवाह एव तयोरिति ॥

स्वगोत्राद्यज्ञाने तु **सत्याषाढः**–'अथाज्ञातबन्धोः पुरोहितप्रवरेणाचार्यप्रवरेण वेति' ।

स्वगोत्राज्ञाने निर्णयः । 'आचार्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयम् । दत्त्वात्मानं तु कस्मैचित्तद्गोत्रप्रवरो भवेत् ॥ यद्वा स्वगोत्रप्रवरविधुरो जामदग्निजः । विवाहं च न तेनैव गोत्रेण तु समाचरेत् ॥' इति **कश्चित्** । **दिवोदासीये**ऽपि–'स्वगोत्रप्रवराज्ञाने जमदग्निमुपाश्रयेत् ॥'

अथ **मातृगोत्रवर्जननिर्णयः** । **शातातपः**–'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् ॥' यद्यपि–'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञानेऽप्युद्वहेदविशङ्कितः ॥' इति **व्यासोक्ते**रज्ञातनामत्वे

---

१—अस्याग्रे–'प्रवरमञ्जर्यां यद्यपीदमुक्तं, तथापि भृग्वङ्गिरोगणेषु भवत्येव । तथा बह्वृचपरिशिष्टे बौधायनः—'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ॥' माधवीये स्मृत्यन्तरे—'पञ्चानां तु त्रिसामान्यादविवाहस्त्रिषु द्वयोः । भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥' इति देशाचाराच्च । सोऽप्याभीरदेशे प्रसिद्धः । चतुर्विंशतिमते—'यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रदृश्यते ॥' इति दिक् । तथा च भृगुः—'यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा । यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत् ॥' इति । पुनश्चतुर्विंशतिमते—'यस्मिन् देशे य आचारः पारंपर्यक्रमागतः । वर्णानां किल सर्वेषां सदाचारः स उच्यते ॥' इतीयानेकेषु मुद्रितपुस्तकेष्वधिकः पाठः । २—मातुर्विवाहात्पूर्वं यद्गोत्रं, मातामहगोत्रमित्याशयः ।

